ऽ।ऽ ऽ ।। ।।।।।ऽ
श्रीमती साऽस्ति हि रभनसगणैः ।
।।।। ।।।ऽ। ऽ।ऽ
प्रभवति ननजरैस्तु रञ्जना ।

# रामकिशोरमिश्र-

 कृता 

ऽ ऽ ऽ
...ौ वाणी





।।ऽ।ऽ।।ऽऽऽ
सजयैः प्रमोदति विद्या

# छन्दस्कलावती

पादेषु मात्रा नव नव भवन्ति ।
रत्यां समान्ते तुकभा लसन्ति ।

SIS S I I IIIIIS

श्रीमती साऽस्ति हि रभनसगणैः ।

IIII IIISI SIS

प्रभवति ननजरैस्तु रञ्जना ।

# रामकिशोरमिश्र-

 कृता 

SS III SSS

तं सं नयति गौ बाणी



IIS ISIIS S

सजयैः प्रसीदति विद्या

# छन्दस्कलावती

पादेषु मात्रा नव नव भवन्ति ।

रत्यां समान्ते तुकभा लसन्ति ।

# छन्दस्कलावती

[छन्दःशास्त्रीयरचना]

रचयिता तथा प्रकाशकः

**डॉ० राम किशोर मिश्रः**

साहित्य-व्याकरणाचार्यः, एम. ए., पी-एच. डी.

**संस्कृत-विभागाध्यक्षः**

महामना मालवीय महाविद्यालयः

खेकड़ा—२०११०१ (मेरठ) उत्तरप्रदेशः, भारतम्।





मूल्यम्— ४०/-

**प्रकाशनतिथिः**

फाल्गुनशुक्लषष्ठी, विक्रमसंवत्सरः - २०४७

२५—२—१९९१

---

मुद्रक :— यमुनामुद्रणालयः, बागपत (मेरठ) उ. प्र.।

## अनुक्रमणिका-प्रथमभागः-वृत्तानुसन्धानम्





## द्वितीयभागः- छन्दोऽनुसन्धानम्



## तृतीयभागः-छान्दसपरम्परा,

# समर्पणम्

ओ३ङ्कारमिश्रसम्भूतो होतीलालः पिता मम ।
देवी प्रातः स्मरणीया मातृत्वेन कलावती ।।
ययोरंशेन मे देहे रक्तं वहत्यहर्निशम् ।
समर्पिता मया ताभ्यां कृतिश्छन्दस्कलावती ।।
—रामकिशोरमिश्रः ।



रचयिता

भारत उत्तरप्रदेश एटाजनपद–सोरोंवासी,
निधिकालाऽम्बरनेत्रहायने खेकरनगरवासवान् ।
होतीलालकलावतीसुतो रामकिशोरमिश्र इह,
भागत्रयेण युक्तां छन्दस्कलावतीं विरचितवान् ।।

# छन्दस्कलावती

प्रथमभागः

## वृत्तानुसन्धानम्

छन्दस्कारं शिवं वन्दे भरतं च पतञ्जलिम् ।
पिङ्गलं जयकीर्ति च हेमचन्द्रादिधीवरान् । १ ।
मया वृत्तानुसन्धानं स्वरचनासु यत्कृतम् ।
छन्दःसूत्रादिग्रन्थेषु प्राप्यते क्वापि तन्नहि । २ ।
यद् यदत्र च मे वृत्तं तत्तन्नूतनमेव हि ।
येषां लक्षणनामानि कल्पितानि मया बुधाः ! । ३ ।
वर्णमात्रादिवृत्तेषु समानि विषमानि च ।
तेषु वार्णिकवृत्तानि दर्श्यन्ते प्रथमं यथा । ४ ।

## समवर्णवृत्तानि

१- वाणी—

ऽ ऽ । । । ऽ ऽ ऽ

तं सं नयति गो वाणी । ५ ।

यथा मम विद्योत्तमाकालिदासीये महाकाव्ये दशमे सर्गे—

वाणी तव सखे ! सत्या, मूर्खस्त्वमिति साऽवादीत् ।
विज्ञाऽस्मि, विदुषा पत्या भाव्यं गुणवता यस्याः ।। १० ।।

२- विद्या—

। । ऽ । ऽ । । ऽ ऽ

**सजयैः प्रसीदति विद्या । ६ ।**

यथा—विदुषा त्वया भवितव्यं निकषा गुरुं चल मित्र ।
भव बुद्धिमान् पठ विद्यां सुलभा हि ते विदुषी सा ।।

—विद्योत्तमाकालिदासीयम्-१०/११

३- जया—

ऽ ऽ । ऽ । । ऽ ऽ । ऽ ।

**गृह्णाति तं भतगान् लं जयेह । ७ ।**

यथा मम काव्यकिरणावल्यामष्टोक्तिशतके—

भूपो यदा नगरीमासिषेध, श्रुत्वा स तन्निधनं वै रुरोद ।
मुग्धे ! प्रिये ! क्व गता मां विहाय, त्वामन्तरेण मदीयो न कोऽपि ।।

—अष्टोक्तिशतकम्-१०३ (१२२)

४- श्रीयमुना—

ऽ । । ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ

**श्रीयमुनेयं भतौ मं यं करोति । ८ ।**

यथा— पूज्यगुरो ! सा तु मामध्यापयन्नो,
भूपतिहर्म्यात्तया निष्कासितोऽहम् ।
मूर्खवरस्त्वं बुधाऽहं मे पतिस्तु

विज्ञवरः स्यादितो गच्छ त्वमुक्त्वा ॥

—विद्योत्तमाकालिदासीयम्-१०/१४

५- शीला—

I I S I S S S S S I S I S

सयमै जंगाभ्यां शीला शोभते सदा । ६ ।

यथा— तव मूर्खता सा विज्ञाता कथं तया ?

वद तत्र मौनं त्यक्तं किं स्वकं त्वया ?

स्खलितैर्मुखान्मे वर्णैः कैश्चिदक्षरै—

रबुधच्च रूपं मे मौनावृतं हि सा ॥

—विद्योत्तमाकालिदासीयम्-१०/१८

६- वाचा—

S S S I I S I I S S S I I S I I

गृह्णीते मससान् तजलान् वाचा प्रिय छान्दस ।१०।

यथा— किं त्वं कामयसे वद कामं ज्ञापय मां प्रिय !

संकोचं त्यज वत्स ! तु शीघ्रं ब्रूहि विवाहित !

विज्ञं मां कुरु पाठय विद्यां स्मारय तां द्रुत—

मीहे द्रष्टुमहं बुधमात्मानं गुरुदेव ! हि ॥

—विद्योत्तमाकालिदासीयम्-१०/१८

७- प्रतिभा—

I S S S S S I I I I I S S I I S I S S

रसर्षिभ्यां षड्भिर्यमनसभरान् गं प्रतिभा करोति ।११।

यथा— त्वदीया सा पत्नी स्वविजितबुधानामकरोदवज्ञाम्,

न तस्याऽकार्षीत्सा प्रिय ! तदपि मानं पतिरस्ति योऽस्य ।

पुनस्त्यक्तोऽसि त्वं तदपि नृपपुत्रीं कथमीहसे ताम् ?
शठे शाठ्यं कुर्यादितिनयवशेन त्वमपि त्यजेस्ताम् ॥
—विद्योत्तमाकालिदासीयम्-१०/२१

### ८- रमणी —

S I I S I I S I I S S S I I S I I S I I S S

**रुद्रविरामयुता रमणी सा यत्र हिभौ भमसाः ससगाश्च ।१२।**

यथा— पूज्यगुरो ! मनसा प्रयतिष्ये पालयितुं कथितं तव धीमन् ।
मामुररीकुरुते न पतिं सा, येन मया वचनं तव कार्यम् ।
पाठय मां निगमान् कविकाव्यं व्याकरणं च हि येन बुधः स्याम्,
कामयसे यदि शर्म निजं तत्पालय मे कथनं कथये यत् ॥
—विद्योत्तमाकालिदासीयम्-१०/२४

### ९- रजनी—

I S I I S I I S I I S S S I I I I S I I S I I S

**दिनेशविरामयुता रजनी सा यत्र जजजया भससाः सगणः ।१३।**

यथा— विवाहितयापि तया मम पत्न्या प्रेषितजनको मम च श्वशुरः
स मामवगन्तुमिहात्रभवन्तं श्रीगुरुमुपयास्यति किं भगवन् !
यदाऽवगमिष्यति ते श्वशुरो यत्तस्य न दुहितुः पतिरस्ति बुधः,
तदैव स मामुपयास्यति राजा ते मतिवमगन्तुमये ! शृणु माम् ॥
—विद्योत्तमाकालिदासीयम्-१०/२६

### १०- शशिकान्ता—

I S I I S I I S I I S S S I I I I S I I S I I S S

**दिवेशगुणेश्वरभिन्नविरामा जाज्जजयभसैः ससगैः शशिकान्ता ।१४।**

यथा— विवक्षसि यद् गुरुदेव ! वचस्तत्पातय मुखतो मम कर्णगुहायाम्,
स मां कथयिष्यति बालिशमुक्त्वा मौनमतिवरं प्रबुधं भवता तम्,
कृतो दुहितुर्ममछद्मविवाहो मूर्खवरजनेन समञ्च कथं तत् ?
अवेहि वचो मम, गच्छ यथेच्छ, येन परिचयस्तव नात्र भवेद्धि ॥
—विद्योत्तमाकालिदासीयम्-१०/७

## ११- योगः—

। ऽ । ऽ ऽ ऽ ऽ ऽ

**समे मगौ, भिन्ने जोगः ।**

**स कथ्यते काव्ये योगः ।१५।**

यथा— ददामि तं, तद् गच्छामि ।
कदैष्यति ? काव्यं कृत्वा ॥
—विद्योत्तमाकालिदासीयम् १२/४८

## १२- प्रभातम्—

। । ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

**विषमे सयौ यत्र सयौ द्विरेतौ, जतौजगौ गश्च समे प्रभातम् ।१६।**

यथा— त्वमिहासि मेऽहं च तव प्रियास्मि, ममासि राजा कुरु मां स्वराज्ञीम् ।
नय राजधानीमिति त वदन्तो न्यपातयत्तस्य गले भुजौ सा ॥
—अष्टोवितशतकम्-६६, (११५)

## १३- विभावती—

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

**तस्तश्चजोरौ विषमे समे तथा, जतौ जरौ यत्र च सा विभावती ।१७।**

यथा— तं बालवीरं सलिलेशवीचिषु, निपात्य तौ क्रूरतया प्रहर्षितौ ।
प्रसन्नकीलालकुले च सोऽग्रहीत्सदा समाधिं शिवसिद्धये चिरम् ॥
—बालवीरम्-५७ (१८७)

## विषमवर्णवृत्तम्

१४- मतिः—

। S । S ।।। S

जगौ, नगौ, पदयुगे ।

। S S S S S S

मतिः शिष्टे, यो गो, मो ग ।१८।

यथा— क्व यास्यसि ? गुरुकुलम् ।

प्रतीक्षिष्ये, त्वायास्यामि ॥

—विद्योत्तमाकालिदासीयम्-१२/४९

इति वर्णवृत्तानि ।

# अथ मात्रावृत्तानि

छन्दःशास्त्रीयग्रन्थेषु मात्रावृत्तानि कानिचित् ।

तस्मान्मया स्वकाव्येषु छन्दांसि लक्षितानि हि ।१९।

## सममात्रिकचतुष्पद्यः

१- नूतनधारा— यस्मिन् वृत्ते, मात्रा अष्टौ ।

तदहं वदामि, नूतनधाराम् । २०।

यथा— तथा भवसि चेद्, यथा त्वामहम् ।

चिकीर्षामि तत्, स्वपतिं मंस्ये ॥

—विद्योत्तमाकालिदासीयम्-१२/५०

२- रतिः— पादेषु मात्रा, नव नव भवन्ति ।

रत्यां समान्ते, तुकभा लसन्ति ।२१।

यथा मम काव्यकिरणावलौ किशोरगीतकाव्ये—

ताः सन्ति रचिता, मम पूर्वकृतयः ।
याः संस्मरन्ति हि, विदुषां सुमतयः ।२। (२७८)

३- चन्द्रम्—

**पञ्चदश च मात्रा यस्मिन्, छन्दसि भवन्ति प्रतिपादम् ।**
**तुकान्तशोभापरित्यक्तं, तत्कथ्यते चन्द्रं छन्दः ।२२।**

यथा— छन्दसि छन्दसि यथा पादा, एकैकाक्षरेणैधन्ते ।
तथैव निशि तस्य तौ चरणौ, पथि विपिनं प्रत्यवर्धेताम् ॥
—विद्योत्तमाकालिदासीयम्-१०/१

४- गौरवम्—

**गौरवे प्रतिपादं षोडश १६, मात्रा भवन्ति छान्दसवर्यं !**
**समे च पादे तुकान्तशोभां, यद् धारयति न वा सोदर्यं ।२३।**

यथा— प्रकृतिरियं यत्सा रजस्वला, प्रकृतिगता स्यात्पत्नी देवी ।
तदा प्रसन्नः सन् त्वं तस्याः, प्रेमी भवेस्तु सरसः सेवी ॥
—विद्योत्तमाकालिदासीयम् १/३५

५- रीति :—

**षोडश१६ यस्या इह पादेषु, मात्रा विलसन्तु रीतिरथ सा ।**
**गीतारम्भश्चतुर्थपादः, सह येन तृतीयस्तुकभादः ।२४।**

यथा मम काव्यकिरणावलौ किशोरगीतकाव्ये नवमकिरणे—

जगतः कटुभिः कर्कशशब्दैः—
भिद्यते सततमिह मम वक्षः ।
अहमस्मि मूकपशुसमस्तदा,
क्रयं विक्रयं कोऽकरोत्कदा ? ।५५२।

६- प्रणीतिः — यस्यां चतुष्पदानि भवन्ति,
मात्राः षोडश१६ पादे सन्ति ।
विषमे समे च तुकान्तरीतिः,
सा ऽऽकथ्यते प्रिये ! प्रणीतिः ।२५।

यथा मम काव्यकिरणावलौ मिथुननिशायामेकादशकिरणे—
सुन्दरि ! रमासि त्वं भार्यासि ।
मम जीवनसहचरी प्रियासि ॥
रमणि ! त्वं रमणीत्वं रक्षेः ।
प्रिये ! मदीयपार्श्वमागच्छे ।२१। (७३०)

७- छन्दोमानः- ऋषिचन्द्राङ्कितमात्राः १७ यत्र च
प्रकुर्वते पादेषु प्रभावम् ।
तच्छन्दो हे छान्दसमानव !
छन्दोमानमहं कथयामि हि ।२६।

यथा—
स विक्रमादित्यो नाम राजा, रथं समारुह्य सभां जगाम ।
सभासदां जयजयकारशब्दैः परितस्तदा सोज्जयिनी जुगुञ्ज ॥
—विद्योत्तमाकालिदासीयम्-१५/९

८- छान्दसी सभा—
यस्यां प्रतिपादमष्टादश१८ सखे !
मात्राः भवन्ति समे च तुकान्तभा ।
तत्रापि कुत्रऽपि तद्भाधरा न,
मया कथ्यते सा छान्दसी सभा ।२७।

यथा — लोकत्रयाद् या पृथगत्र गदिता, ताराहरिश्चन्द्रयशश्च धरते ।
चाण्डालगाथा हि तयोः प्रसिद्धा, या श्रोतृजनगणदुःखानि हरते ।।
—विद्योत्तमाकालिदासीयम्-१/४

## ९- वसन्तवृत्तम्—

मात्राश्च यत्र गगना२० त्मयुता भवन्ति,
न क्वापि राजति सखे ! तुकान्तबन्धः ।
छन्दस्तु मन्ये तद्धि वसन्तवृत्तं,
विद्योत्तमाकालिदासीयकाव्यजम् ।२८।

यथा —
महाराज ! राज्येऽस्मदीये भवानिह, सुखं शान्तिमिच्छति हि नित्यं प्रजानाम्
परं मे सुताया विवाहस्त्वया ह्यः कथं कारितो मूर्खवर्येण साकम् ?
— विद्योत्तमाकालिदासीयम्-११/४६

## १०- देवी—

यस्यां भवन्ति विंशतिरेका च मात्राः,
सा पंक्तिरभवद् देवीच्छन्दसस्तथा ।
समपादयोर्भवति यत्र तुकान्तचर्चा,
परिलक्ष्यतां सा काव्ये मे सखे ! यथा ।२९।

यथा —
भक्ताश्च तत्र काशीपतिविश्वनाथं, नानाविधैः कृतपदैः श्लोकैः स्तुवन्ति ।
भवनेषु साधु पशुपतिनाथं भजन्ति, मन्दिरगतास्तमित्थं संकीर्तयन्ति ।।
—विद्योत्तमाकालिदासीयम्-१/७

११- प्रेमकामः—

अष्ट२८विंशति मात्राः प्रिय ! यस्मिन् छन्दसि प्रभवन्ति ।
समविषमपादाः परस्परमत्र तुकजाभां व्रजन्ति ॥
तत्तु वृत्तं कथ्यते वै मया मत्या प्रेमकामः ।
चतुर्दशभिः१४पदे छिन्नो यत्र विलसति यति-विरामः ।३०।

यथा मम काव्यकिरणावल्यां निर्भयकिशोरगीतकाव्ये—

दीपकः प्रथमं प्रकाशं याति कुरुते ततो घातम् ।
अहावुरगहरोऽपि वीणां वादयित्वा बन्धपातम् ॥
यातनां मौन प्रदातुं कोऽधिकारस्ते धुरीय !
वरं देहि न तत्कथं मां शप्तुमधिकारस्त्वदीयः ? ।३/४।

१२- प्रीतिः- सिद्धिनेत्रा२८ङ्कितैर्गणनैस्त्रयः पादा उल्लसन्ति।
समस्तास्तेऽन्योऽन्यवर्णैस्तुकान्तैर्लसिता भवन्ति ॥
गीतिकारम्भिकः पादस्तुर्यपादत्वं प्रयाति ।
प्रीतिनाम्नी वृत्तशास्त्रे चतुष्पदिकयं विभाति ।३१।

यथा मम कलावतीपुत्रगीते काव्यकिरणावल्याम् —

कुसुमकोमलमानसः सततं कविर्गीतानि लिखति ।
तं च प्रति जगतीह प्रस्तरकठोरव्यंग्यानि क्षिपति ॥
कः समुत्थापयितुमर्होऽभवन्मानं कवेरस्य ?
विमुक्त प्रतियुगं गीतं कवेर्गानं कवेरस्य ।२१/३।

१३- संगीता—

द्वात्रिंश३२न्मात्राभिर्गीताः पादत्रयेण वा संगीताः ॥
पादा विषमास्तथा समा अपि तुकविभयान्तेऽन्योऽन्यं नीता ॥

गीतारम्भिकपादः प्रथमश्चतुर्थकत्वं प्राप्य विभाति ।
त्वया श्रुता वद भोः कविकान्ते! चतुष्पदीयं छन्दोजातिः ।३२।

यथा मम काव्यकिरणावल्यां कलावतीपुत्रगीतकाव्ये नवमकिरणे —

चन्द्रिकायुता मम विभावरी ताराः प्रतिहारत्वमागताः ।
शून्यमेव परितो विलोक्यते शेते स्वापं संसृतिर्गता ॥
तत्र लभ्यते चिन्तितकविना मया कस्यचित्प्रेमोद्‌गारः ।
भ्रामं भ्रामं वसति मानसे कथं कस्य स्वापः सुकुमारः ? ।२५/२।

## अथ सममात्रिकपञ्चपद्यः ।

१४- रसभद्रा— भवन्ति यस्यां षोडश१६ मात्राः,
भवति पञ्चपादैस्तद्यात्रा,
त्रिभिः पदैर्या तुकान्तगात्रा,
भुवि पञ्चपदी बुधैर्ज्ञायताम्,
मया कथ्यते सा रसभद्रा ।३३।

यथा मम काव्यकिरणावल्यां नवमकिरणे कलावतीपुत्रगीतावली—

ग्रामे ग्रामे नगरे नगरे,
कविकलाकारमणिभाविसरे,
गङ्गाया निर्मलपाथसि रे !
कविरचनाहृदये प्रकाश्यताम्,
सूर्य इवाऽस्य काव्यालोकः ।१।

१५- रसभान्ता— अङ्काभ्यामिह रस१६ चन्द्राभ्याम्,
गणिता मात्राः पञ्च पदेषु ।
समे क्वचिद् वान्यत्र क्वचिद् वा,

चतुर्थपंचमयोर्हि तुकान्ता ।

मया कथ्यते सा रसभान्ता ।३४।

यथा मम काव्यकिरणावल्यां दशमकिरणे गीतजवाहरे—

आव्रज मे प्रिय ! लाल जवाहर !

त्वामाह्वयति जन्मभूरेषा ।

पश्य, त्वदीयो देशः कृष्टः,

यत्र दयालु र्देवो वृष्टः ।

मया त्वमत्र कदापि न दृष्टः ।३/६।

१६- सरसान्ता- यस्यां पादाः स्युः शरा[५]ङ्किताः ।

मात्राः सन्तु रसे[१६]श्वराङ्किताः ।

प्रथमे पादे तथा द्वितीये,

चतुर्थपंचमयोस्तुकभान्ता ।

मया कथ्यते सा सरसान्ता ।३५।

यथा मम काव्यकिरणावल्यां पंचमकिरणे किशोरगीते—

इदंयुगीनाः शिक्षागुरवः ।

धनलोलुपा यथा ते कुरवः ।

आसन् पुरातना नहीदृशाः,

ये कुर्वन्ति न छात्रसौष्ठवम् ।

मा विस्मर प्राचीनगौरवम् ।४/१।

१७- सुप्रभा— यस्मिंश्च छन्दसि मात्रा लसन्ति,

पादेषु पञ्चसु वसु[१८]वीशयुक्ताः ।

पादाश्च प्रथमेन पदेन त्यक्ताः,

पदयोस्तु समतुकभां प्राप्नुवन्ति ।
तां सुप्रभां मे वाचो वदन्ति ।३६।

यथा मम काव्यकिरणावली पञ्चमकिरणे किशोरकाव्ये—

यो ज्ञानमिच्छति नहि तत्समीपे
विद्याप्रदानीह प्रसाधनानि ।
गतकामपार्श्वे तु सुखानि तानि,
तस्माद् वदति रामो मे स्वकीयः ।
अयमेव किं भो ! न्यायस्त्वदीयः ? ।१।

१८- पुष्पजाति :– यस्यां च पादाः प्रिय ! पञ्च प्रथिताः
प्रतिपादमष्टादश[१८]मात्रिका ये ।
चतुर्थपादस्य तुकान्तयोजना
पञ्चमपदस्य वर्णान्तत्वं प्रयाति ।
सा कथ्यते सुभगे ! पुष्पजातिः ।३७।

यथा मम काव्यकिरणावली दशमकिरणे गीतजवाहरकाव्ये—

"प्रविभिन्नराष्ट्राणां जनविशेषा—
स्त्यक्त्वा हि सर्वं निजवैमनस्यम्,
यदन्तकर्मणि दिल्ल्यां समागताः ।"
✲ डीनरस्क इति सश्रद्धमुक्तवान्,
गतः क्व हा भारतभास्करो महान् ! ।१२।

१९- बाणजाति :–पादा भवन्ति यस्यामिह बाण[५]कथिताः,
(२१) राकेशनेत्रगणिता मात्राश्च पादे ।

---

✲ श्री डीनरस्कः १९६४ तमे वर्षे ऽमेरिकाया विदेशामात्य आसीत् ।

श्रीमति ! वचः शृणु सदा चरणो युगा४ङ्कः
पञ्चमपदस्य वर्णान्तत्वं प्रयाति ।
सा कथ्यते प्रियवरे ! स्मर बाणजातिः ।३८।

यथा— त्वामन्तरेण गङ्गायमुने हि शून्ये,
वैधव्यमुपगता देव ! सरस्वती सा ।
धारात्रयस्य सङ्गम इव त्वयि प्रयागे,
ब्रह्म-स्वभू-महेशानामंशवृन्दम् ।
वन्दे महापुरुष ! तव चरणारविन्दम् ।
—गीतजवाहरम्-७

२०- भोगिनी—

गीतिका सा पञ्चपदिका प्रथमपदयोर्या तुकान्ता ।
तृतीयं त्यक्त्वा पदं स्याच्चरमयोरपि सा तथान्ता ।।
समानाः प्रतिपदं मात्रा विराजन्ते बुधाः ! यस्याम्,
चतुर्दश१४भिश्छिन्नयतिका चाऽष्टाविंशति२८कलायुक्ता ।
मया कविना काव्यमार्गे भोगिनी सा गिरा भुक्ता ।३९।

यथा मम काव्यकिरणावलाबष्टमकिरणे निर्भयकिशोरगीते—
प्रातरुन्मत्तो हि पवनो यदा कलिकां परिचिनोति ।
शरत्सायं यदा शशिनश्चन्द्रिकाया रूपमेति ।।
क्षितिजतो वक्ष्यामि किञ्चिन्मधुरवचसा चातकस्य
गीतनर्तनवाद्यैरिह मलयवंशे त्वं समापय ।
त्वमिह किरणीभूय प्रातर्मम सुनयनोन्मीलनन्नय ।२।

२१- रसगर्भा—

षोडश१६मात्रिकयत्या भिन्ना द्वात्रिंशन्३२मात्राभियुक्ता ।
चतुर्षु चरणेषु हि तुकशोभा पदे तृतीये तुकभामुक्ता ।
पञ्चमपादो गीत्यामस्यामारम्भिकस्तु पादो भवति,
हे श्रीमति ! मन्मुखान्निर्गतो ध्वनिरस्याः किं श्रूयते त्वया ?
रसभद्रे ! रसगर्भानाम्नी पञ्चपदीयं कथ्यते मया ।४०।

यथा मम काव्यकिरणावल्यां नवमकिरणे कलावतीपुत्रगीते—

तीव्रहलाहलचषकः पीतो मया तत्र तस्मिन्नाहूते ।
उपालभेयातां न ते किमपि दशनवाससो स्वीये स्यूते ।।
यद्यनुमन्येथाः पीयूषं वितरेयं हृत्वा शशि-शीतम्,
नैव तृप्तिदं तस्य तज्जलं तत्कूलाश्रयमा ! मा याचीः ।
मम सुखगीतं गतं गायने नयननीरमथ मा मायाचीः ।३०।

## अथ सममात्रिकषट्पद्यः ।

२२- वनिता— पदे समविषमे तुकान्ते,
यत्र गीतौ षट् पदानि ।
तुकविभा चान्तिमपदान्ते,
तुकान्तानि पदानि तानि ।
१४चतुर्दशमात्राः सृजामि,
तामहं वनितां वदामि ।४१।

यथा मम काव्यकिरणावलौ दशमकिरणे गीतजवाहरे—

भारती भारत गच्छेद्,
भारतः सप्रेम यस्याम्,
आत्मनवमङ्कुर रक्षेद् ।

तद् ह्यनन्यं पत्युरस्याम्,
पारिवारिकप्रेम देहि,
एहि शान्तेः दूत ! एहि ।२०।

२३- खेलः—

यत्र छन्दसि प्रथमपादम्,
पञ्चमं च विहाय कान्ते !
तृतीयस्य पदस्य चाऽन्ते
द्वितीयान्तिमवर्णमेलः ।
चतुर्थे षष्ठे तुकान्तः
स तु चतुर्दश,[१४]मात्रखेलः ।४२।

यथा मम काव्यकिरणावलो पञ्चमकिरणे किशोरगीते—
वसन्तोऽयमिति स्ववस्त्रैः
प्राप्य सर्वे पीतमेलम् ।
कृतात्मैकहृदः सखेलम्,
यत्र बहु बहु प्रमोदन्ते ।
होलिके ! कथमहं जानै
कथय, पर्व नु शुभमिदन्ते ? ।५।

२४- नारिकेल :—

नेत्र[२]वेदा[४]ङ्कितौ पादौ
समौ त्यक्त्वा चरमभागौ,
तुकविभायुतविषमपादौ ।
चतुर्दश[१४]मात्राभिरुक्तः,

पञ्चमे षष्ठे च मेलः ।

कथ्यते स तु नारिकेलः ।४३।

यथा मम काव्यकिरणावलौ पञ्चमकिरणे किशोरगीते—

प्रभाते सह जयतुकारै—
रुत्तरे दक्षिणे पूर्वे
पश्चिमे सह पुष्पहारैः ।
समं कुर्मः सिञ्चनन्ते ।
भारतध्वज ! वन्दनन्ते ।८/४।

२५- समृद्धगीति :—

यस्यां च षट्पदिकायां भवन्ति,
मात्राभिरष्टादशभिः १८ समेताः ।
प्रथमं तृतीयं च विहाय चरणम्
पादास्तुकान्तै र्वर्णै रुपेताः ।
पञ्चमपदे षष्ठतुकान्तनीतिः ।
सा कथ्यते पादसमृद्धगीतिः ।४४।

यथा मम काव्यकिरणावलौ पञ्चमकिरणे किशोरगीते—

सन्न्यस्य विधयः प्रोन्नतिकरा ये
पुरुषेण पुरुषं सम्मेलयन्ति ।
ये संविधानं नाऽत्राऽऽचरन्ति
सूर्ये तपति ते दिवान्धा भवन्ति ।
तं विस्मरेत न गणतन्त्रदिवसम् ।
विदधाति यो मामविषण्णमनसम् ।६/३।

२६- अभिरामा—

सिद्धि[३८] यक्षाङ्किता मात्राः षट्सु पादेष्वपि रमन्ते ।
समा विषमाश्चापि पादास्तुकान्ता इह विराजन्ते ॥
गीतिकाऽऽरम्भिकः पादः षष्ठपादत्वं प्रयाति ।
तुकसमत्वं प्राप्य पादः पञ्चमस्तेनैव भाति ॥
द्वितीयं प्रथमस्य तुकभां तृतीयस्य परं नयामि ।
तामहं षट्पदीं कान्ते ! गीतिमभिरामां वदामि ।४५।

यथा मम काव्यकिरणावल्यामष्टमकिरणे—

मृगो वीणा-तार-लय-प्रच्छन्नभगवन्तं ह्यपश्यत् ।
मानवः पाषाणहृदयः प्रस्तरे प्राणानपश्यत् ॥
पिकवचश्श्रुत्वैव शिक्षितमृतोः राजा भिक्षुकत्वम् ।
कमलकोमलबन्धने मरणादलिर्न गतो भयत्वम् ॥
दीपज्वालायां सदा शलभा मया दृष्टा ज्वलन्तः ।
क्षणिकपरिचयमेत्य पाषाणा मया दृष्टा द्रवन्तः । १३/१।

२७- सङ्गीति :—

लोचन[१२]कालाङ्कितगणनाभि र्मात्राभिर्लसिताः षट्पादाः ।
रस[१६]परमेश्वराङ्कितै र्मात्रिकगणनैर्विरता मध्ये यत्या ॥
गीत्याः प्रारम्भिकस्तु पादो यस्याः षष्ठः पादो भवति ।
समः समं विषमो वा क्व समं पादो गच्छति तुकान्तगत्या ॥
पञ्चमपादस्य तुकान्तगति षष्ठे पादे नियोजयामि ।
तामहं गीतिकां छन्दोज्ञे ! शृणु मां सङ्गीतिं कथयामि ।४६।

यथा मम काव्यकिरणावली नवमकिरणे—

अहसमहन्त्वहसन् कुसुमानि च, हिमहीरो प्रगतो परिहासम् ।
रुदत्सु पर्णपाताधरेषु च, माममिलत् स्मित इव मधुमास: ।
रुदिते मय्यागतनभोघनै: शान्ता मरुसञ्चिता पिपासा ।
सततमश्रुबिन्दुषु निपतत्सु च, करुणामिलच्छुभ आवास: ।।
मम हृदये दहतितरामग्नि र्नयनेषु प्रपूर्णमस्रममित: ।
अहमस्मि कविर्जीवनस्य मे चित्रा गाथा नाना जगत: ।९/२।

## अथ सममात्रिकसप्तपद्य: ।

२८- सुरसा— चतुर्दश १४ मात्रा हि यस्यां
सप्तपदिकायां भवन्ति ।
तुल्यपादान्तिमा वर्णा-
स्तुकविभाप्रभया लसन्ति ।
षष्ठपादान्तिमतुकाभां
सप्तमस्य विभां सृजामि ।
तामहं सुरसां वदामि ।४७।

यथा मम काव्यकिरणावली नवमकिरणे कलावतीपुत्रगीते—

शूलतामागते स्वापे
सुमनसामिह वञ्चितोऽहम् ।
ज्वलन्नस्मि स एक दीपो
गत: स्नेहो यस्य, सोऽहम् ।
शयनपरिवर्तनं नीत्वा
कामनां मनसा करोमि ।
साधनां मनसा करोमि ।७/१।

२९- कविजाति :—

जलधीश्व[१४]राङ्किता मात्राः
यस्याश्च सप्तपदयात्रा ।
प्रथम—द्वितीय—चतुर्थानां
पादानां तुकान्तगात्रा ।
षष्ठसप्तमयोश्च पदयोः
पादान्ते तुकभा भाति ।
सा गीतिरस्ति कविजातिः ।४८।

यथा मम काव्यकिरणावल्यां नवमकिरणे—

तवोत्कामाः सन्ति चित्राः
साधनालिस्तव विचित्रा ।
मनोनीता पूजना ते
देवतास्तव भुवि पवित्राः ।
दृश्यते चान्तरो ज्वालो
वाष्पपूर्णाक्षिषु ज्वलन् ते ।
कवे ! चित्रं जगदिदन्ते ।२०/२।

३०- सौरभम् —

सप्तसु पादेषु प्रिये ! यस्मिन्
गीते षोडशमात्रारीतिः ।
पादे च समे विषमे क्वापि च
यस्मिन् श्रीमति ! तुकान्तनीतिः ।

षष्ठेन पदेन सप्तमस्य
पादस्य तुकाभां रचयामि ।
तत्सौरभवृत्तं कथयामि ।४०।

यथा मम काव्यकिरणावल्यां नवमकिरणे—

मम शून्यं हृदयं ह्यागतया
त्वधिकारः सहसा त्वया कृतः ।
उद्‌बोध्य पुरागतभावं तम्,
प्रेम्णा रत्याऽहं त्वया वृतः ।
तत्स्वागतसूचकं स्वनयनै —
विन्दुजवरहारं रचयामि ।
प्रियमहं प्रतिदिनं गायामि ।१५/१।

# अथ सममात्रिकाऽष्टपद्यौ

३१- वृत्तकम्– अष्ट पादा यत्र वै
कला द्वादश१२ कल्पिताः ।
समस्ताः पादाः समा—
स्तुकान्तं वर्णं गताः ।
पदे गीतारम्भिके
सप्तमाष्टमतां गते ।
कथ्यते तद् वृत्तकम्,
शृणु सुमुखि ! मे रतिमते !।५०।

यथा काव्यकिरणावल्यामष्टमकिरणे—

सहस्रवर्षकुप्रबन्ध !
सत्यतत्त्वमितिगतः ।
सुभाग्यसूर्यसमुदयः,
कुभाग्यमेघ इतिगतः ।
तमी निशा गता परम्,
तमो न गन्तुमशक्नोत्
समुद्गतो रविः परम्
विभा न व्याप्तुमशक्नोत् ।१६/४।

**३२- पारिजातः—**

**अब्धिचन्द्र १४ मिताश्च मात्राः**
**प्रतिपदं यस्यां भवन्ति ।**
**समा अष्टसु पादकेषु**
**तुकान्ताःपादा लसन्ति ।**
**गीतिकायाः प्रथमपादो**
**सप्तमाष्टमतां प्रयातः ।**
**मया तच्छन्दो बुधा हे !**
**कथ्यतेऽसौ पारिजातः ।५१।**

यथा मम काव्यकिरणावल्यां नवमकिरणे किशोरगीतावली—

को नु जानीते हि कस्यां
मननचिन्तायां वसामि ?
निशायां कं वनं सजलः
स्वप्नगतमिव तर्कयामि !
क्रन्दनं कुरुते हि जगती
यद्धि तद्गीतं मदीयम् ।

आह यो हि पराजितं यत्
तत्तदेव जितं मदीयम् ।१६/२।

## अथ सममात्रिकदशपदी ।

२३- कीर्तिकान्तम्—

द्वितीये पादे चतुर्थे
तुकभया सह गीयमानम् ।
पदै र्दशभिः सह प्रयुक्तम्,
चतुर्दश[१४]मात्रीयगानम् ।
पञ्चमं षष्ठं विहाय
नवममष्टममपि च पादम्,
दशमसप्तमयोस्तुकान्तम् ।
सप्तमात्पादाच्च पश्चात्
त्रयो गीतारम्भपादाः,
कथ्यते तत्कीर्तिकान्तम् ।५२।

यथा मम काव्यकिरणावल्यां नवमकिरणे किशोरगीतावली—

मया दृष्टास्तीर्थकाकाः
यन्त्रतुल्याश्चलाः पण्डाः ।
ये भ्रमन्ति गृहीतकर्ण-
स्पर्शि-सोरोंपुरीदण्डाः ।
सुभक्षितपरभोजनानां
विपुलदेहानाममीषां

पापकाण्डान् गदितुमर्हः ।
स एकोऽस्मि प्रदीपकोऽहम्,
यं सखा निर्वेगवायु—
र्नास्ति निर्वापयितुमर्हः ।२७/७।

# अथ सममात्रिकैकादशपदी

३४- प्रफुल्लगीतम्—

षोडश१६ मात्रिकपदानि यस्मिन्,
संख्यायामेकादश सन्तु ।
समे च पादे यत्र समानाः,
वर्णानामन्ता विलसन्तु ।
क्वापि कदापि विषमपादेऽपि
स्यादक्षरजोऽप्यन्तिमभागः ।
अस्याऽप्येकादशपादेऽपि
गीतस्याऽऽरम्भिकपदरागः ।
एकैकेन पदेन समृद्धम्,
शृणु सुभगे ! छान्दसपदरीतम्
तत्कथयामि प्रफुल्लं गीतम् ।५३।

यथा मम काव्यकिरणावल्यां नवमकिरणे—
कांक्षेयं नो किमपि वैभवम्,
वाञ्छेयं मानं न कस्यचन ।
कांक्षेयं तामहं न प्रभुताम्,

वाञ्छेयं दानं न कस्यचन ।
नूतनकल्पनामहमिच्छेयम्,
यया भवेद्धि विश्वकल्याणम् ।
शक्तिसंघटनमहमिच्छेयम्,
जगतो येन भवेदुत्थानम् ।
युवकानामुत्साहिवराणाम्,
सहयोगं शुभमहमिच्छेयम् ।
अहन्तु मधुरस्मितमिच्छेयम् ।१३/१।

## अर्धसममात्रिकचतुष्पद्य: ।

३५- आभा — पूर्वयोस्तु
षड्[६]मात्राः ।
उत्तरयोस्तु
सप्त[७] साऽऽभा ।५४।

यथा — तावदहम्,
प्रयतिष्ये ।
यावन्न माम्,
मस्यसे स्वम् ।।

— विद्योत्तमाकालिदासीयम्-१२/५१

३६- शशिबाला— विषमपादयोश्चतुर्दश[१४]
षोडश[१६] समपादयोश्च मात्राः ।
यस्यां सन्ति चतुष्पद्याम्,
तां कथयामि सखे ! शशिबालाम् ।५५।

यथा— उत्तिष्ठोत्तिष्ठ मे पितः !
शेषे देवोत्थानशुभदिने ?
किं वा देवैः सहोस्थित—
स्त्यक्तजन्मभूरसि दिवं गतः ?
—काव्यकिरणावलिः ।१२/६।

**३७- गिरा— अब्धि[१४]चन्द्रकलाः प्रथमयोः ।**
**सिद्धि नेत्र[२८]कलाश्च परयोः ।**
**चतुर्दश[१४]भिर्यतिः परयोः पञ्च[५]भिर्नव[९]भिस्तथा स्यात् ।**
**तुकान्ताः पादाश्च यस्यां सा मया कथिता गिराऽभात् ।५६।**

यथा— नाविकश्चालयति नावम्,
किं न गच्छति तीरभावम् ?
परं मध्येधारमम्भसि मज्जितो मज्जितो भविता ।
प्रेमसंसारः स्वयं निर्मितोऽयं निर्मितो भविता ।।
—काव्यकिरणावलिः -८/८/२

**३८- गीतदारिका—**

**प्रथमपादयो र्वसु[१८]चन्द्रधारिका ।**
**समस्तपादेषु तुकान्तकारिका ।**
**षडी[१६]श्वराभ्यां पादहारिका ।**
**कथ्यते हि सा गीतदारिका ।५७।**

यथा भाषावैज्ञानिकमहर्षियास्काचार्यकृतनिरुक्ते दारिकागीतिः—
सम्भवेऽपि स्वजनदुःखकारिका ।
सम्प्रदानसमयेऽप्यर्थहारिका ।।

यौवनेऽपि बहुदोषकारिका ।
दारिका पितुर्हृदयदारिका ॥

३९- सौख्यदा-

तुकान्ताः पादाश्चतुर्दश[१४]भिन्नयतयः स्युः ।
पूर्वपदयोस्त्रयोविंशति[२३]मात्रिका पदभूः ॥
रसनयन[२६]मात्राश्च परयो र्यत्र पदयोरिह सदा ।
सा मया गीतिका कथिता ध्वनिद्वयदा सौख्यदा ।५८।

यथा — भुवो हिमगिरयो व्रणेष्वपि मा द्रवीभूवन् ।
घनाश्चातकचितो वर्षा मा स्म कुर्वीरन् ॥
परं वीणायाः स्वरानालपन्तो गच्छत सदा ।
विदलयन्तः कण्टकानिह रतिपथं गच्छत मुदा ॥
—काव्यकिरणावलिः - ८/१०/२

४०- पुच्छलिका—

सिद्धिनेत्रा[२८]ङ्किता मात्रास्त्रिषु पदेषु यदा भवन्ति ।
चतुर्थे पादे तदा बुध ! चतुर्दश[१४]मात्रा लसन्ति ।
गीतिकायामिह च यस्यां तुकान्तान् पादान् सृजामि ।
तां तु पुच्छलिकां वदामि ।५९।

यथा—कः शृणोति स्वदुःखगाथां पुनरहं कं श्रावयेयम् ?
स्वपिति चाऽऽवृतमुखो विश्वो मत्त इव तत्क्व गच्छेयम् ?
बन्धनैराहताः प्राणा विग्रहं न जहति मदीयम् ।
निश्वसिति गानं मदीयम् ॥
—काव्यकिरणावलिः ६/६/३

**४१- कविगानम्—**

रसच[१६]न्द्राङ्कितमात्राभिन्नौ तुकान्तवर्णौ लसतः ।
वसु[२८]नेत्राङ्कितगणनायुक्तौ यस्मिन् पादौ भवतः ।।
द्वात्रिंशत्[३२] मात्रिकपादद्वयमिह कुरुते तुकान्तपदमानम् ।
षोडश[१६]मात्रिकयत्या भिन्नं मया कथ्यते तत्कविगानम् ।६०।

यथा— अश्रुवृष्टयो मृतकशरीरं यत्र यदाऽऽवृण्वन्ति ।
जीर्णवसनतः परवशलज्जा दृष्टिं निपातयन्ति ।।
तत्र वेदनातन्तुभिरेवं कुर्वे व्रणे सूत्रसन्तानम् ।
अभिशापानामस्मिंल्लोके कुर्वेऽहं नूतननिर्माणम् ।।

—काव्यकिरणावलिः -८/६/१

**४२- सुकीर्तिः—**

रसचन्द्रा[१६]ङ्कितमात्राभिर्या पादत्रयेऽपि भिन्नविरामा ।
नेत्र[३२]गुणाङ्कितमात्रायुक्तैः प्रभवति पादैस्त्रिभिरभिरामा ।।
षोडश[१६]मात्राभिः संयुक्तं पादं चतुर्थमिह रचयामि ।
तामहं सुकीर्तिं कथयामि ।६१।

यथा— किं सुखमयमभवम्मे बाल्यं जागतिकं वैभवं भवति किम् ?
हा ! कर्तुमलं ह्यभूवमथ रे ! लेशमात्रमपि तदनुभवं किम् ?
बाल्यादेव वेदनाभारे वाहनशिक्षा मया गृहीता ।
रोदनशिक्षा मया गृहीता ।।

—काव्यकिरणावलिः -९/१४/१

## अर्धसममात्रिकपंचपदी

४३- ज्ञानवती— सिद्धीश[१८]मात्रा यस्मिंश्च पद्ये

प्रथमे द्वितीये पादे भवन्ति ।
ततस्तृतीये तुर्ये पञ्चमे
१७मुनीशमात्राः परिकल्पयामि ।
तदहं सखे ! ज्ञानवतीं वदामि ।६२।

यथा मम काव्यकिरणावल्यां दशमकिरणे—

स्वातन्त्र्यमस्माकं जन्मसिद्धो
ह्यधिकार इति चेतसि साधु कृत्वा ।
स्वभारती-भारत-लोकभूत्यै
गृहीतवानिह यो देशभारम् ।
नमामि तमहं नृपनीतिकारम् ॥ - ४/१

## अर्धसममात्रिकषट्पद्यः ।

४४- रसवती— यत्र पादानां चतुर्णाम्,
१४चतुर्दशमात्राभिरन्ताः ।
पञ्चमे षष्ठे च पादे,
समे विषमे वा तुगन्ताः ॥
चन्द्र२१नयनाङ्कितकलाः पदयोः करोमि ।
रसवतीं तां गीतिकां मनसा वृणोमि ।६३।

यथा— नानुमोदक इष्टकाना—
मित्थमेव न रोधकस्त्वम् ।
अननुकूलः कर्मणो यदि
मर्मणो ह्युदबोधकस्त्वम् ॥

व्यवितगं याचनमितो मयि सादरन्ते ।
भावनाजां पूजकं मे मानसन्ते ॥
—काव्यकिरणावलिः-८/१/२

४५- नूतनगीतम्— १६रसचन्द्रमिता मात्रा यस्मिन्,
पादेषु चतुर्षु प्रभवन्ति ।
पञ्चमे तथा षष्ठे पादे
३२द्वात्रिंशन्मात्रा विलसन्ति ।
गीतारम्भं षष्ठे कृत्वा पञ्चमतुक्भया योजयामि ।
समयोः पदयोस्तुक्भां दत्वा तन्नूतनगीतं कथयामि ।६४।

यथा— मृत्युरनाहूतो न कदाचिद्
ह्यकरोदस्मिन्नरे प्रहारम् ।
निजहस्ताभ्यामेव मानव—
स्त्वग्रहीन्मृत्योरधिकारम् ॥
भूते गते त्वागतं साधय मनुज ! भविष्यति निष्ठामानय ।
रे यौवनगर्वोन्मत्त नर ! बोधं बोधं पदमवलम्बय ॥
—काव्याकरणावलिः-६/८/३

४६- निर्मला— गीतिका सा प्रतिपदं यस्याः सखे ।
चतुष्पादेषु ६ ग्रहेश्वरजाः कलाः ।
समे पादे तुक्विभा विलसति यथा
पञ्चमे षष्ठे तथा सा निर्मला ॥
चरमयोः पदयो द्वयोः संपूजिताः,
व्योमवेदाङ्कितबलाः४० प्रभवन्ति मात्राः ।

१९ऊनविंशत्यैकविंश२१त्या यति-
यंत्र चरणैर्भवति ६षड्भिः काव्ययात्रा ।६५।

यथा— पादरजसा शिरः पुनरुत्थापितम्,
चक्षुषः पन्थानमपसर्तुं हि मे ।
विद्युतां मध्ये समग्रे गच्छतः,
तद् हृदः पदमस्थिरीकर्तुं रमे !
गन्तुमसमर्थस्य झञ्झामन्थरा किन्तु भविता मे शिरो नो नन्मतुहंम् ।
स्वीकृत ह्यामन्त्रणं मरणस्य मे जीवनं लप्स्ये परन्नो त्यक्तुमर्हम् ॥
—काव्यकिरणावलिः-८/२/१

४७- दिव्यकान्ता— २१एकविंशतिरत्र मात्रा विराजन्ते ।
चतुष्पादेष्वत्र याः समतां लभन्ते ॥
चरमयोरष्टौ तथा२८ विंशति मात्राः ।
पञ्चमे षष्ठे च याभिः काव्यगात्रा ॥
१४चतुर्दशभिर्मध्ययतिका प्रतिपदं याऽऽस्ते तुकान्ता ।
षट्पदी कविना मया बुध ! कथ्यते सा दिव्यकान्ता ।६६।

यथा— त्वमिह मित्र कारितः स्वीयो जगत्याः ।
श्रावितं चन्द्रादिभिर्गीतं स्वमत्या ।
स्वरप्सरसोऽवस्थिता ग्रहणार्थन्ते ।
व्याहरति मधुमास इह सुस्वागतन्ते ॥
परित्यज्याऽमृतं गरलस्याऽभिनन्दनमिह न कुर्याः ।
नीलनभसो मुक्तपक्षिन् ! प्रेमबन्धनमिह न कुर्याः ॥
—काव्यकिरणावलिः-९/४/२

४८- विकास :— नेत्रवेदाङ्किताः४२ पादत्रये प्रथमं
पञ्चमे पादे च गणना विराजन्ते ।
चन्द्रयक्षाङ्किता२१ मध्ये विरामाङ्काः
पदे यत्या पदे गत्या सुशोभन्ते ।।
द्वितीये प्रथमे च पादे सान्तवर्ण-
स्तृतीये पञ्चमे पादे यस्तुकान्तः ।
चतुर्थे षष्ठे तथा सः ।
१४ चतुर्दशमात्रास्तयोः पदयोरपि स्यु-
श्चान्तपदयोर्गीतिकारम्भिकपदान्तः ।
कथ्यते श्रीमति ! विकासः ।६७।

यथा—

मृत्युदिवसे वासनायाः स्वर्णवेला वियुङ्क्ते देहाद् यदा निश्श्वाससङ्गः ।
विधति संस्मृतिशरः स्वान्तं मामकीनं विशति हृदयं शूलरूपः सृष्टिरङ्गः ।।
स्वाप्निकीयं शर्वरी रिङ्क्ते न रिङ्क्ते किन्तु सजले कम्पिते ते रचितव निह,
चक्षुषी रतिचाटुतायाः ।
चैत्रिकीयं चन्द्रिका विन्त्ते न विन्त्ते कस्यचिदहं नयनविषयमवाप्तवानिह,
फलञ्चेह स्वरूपतायाः ।।

—काव्यकिरणावलिः -९/५/३

## अर्द्धसममात्रिकसप्तपदी ।

४९- धरणिः— पादांश्चतुरोऽधिगच्छन्तु
मात्राश्चतुर्दश हि यस्याम् ।

पञ्चमे सप्तमे षष्ठे
वस्वधिकविंशतिर२८तस्याम् ॥
समे द्वितीये चतुर्थे च पादे तुकाभा विलसति ।
गीतारम्भपदावृत्तिः सप्तमपादेन सङ्गता ।
पादयोः षष्ठसप्तमयोस्तुकान्ता धरणिमंता ।६८।

यथा— श्रूयते प्रतिसुमं गुञ्जन—
मिवालेः प्रियकाव्यगानम् ।
कोकिलाया मधुरवाण्यां
ध्वन्यते तदवाप्तिमानम् ॥
सोत्कम्पे साभिलाषे ज्ञानचक्षुरदृष्टकामे
आत्मैक्यंगते हृदये वासनाग्रहणं किमेतत् ?
आगतोऽयं प्रेमसमयः पुनः प्रिय ! रुदितं किमेतत् ?
—काव्यकिरणावलिः- ६/५/२

# अर्धसममात्रिकाऽष्टपद्यौ ।

५०- प्रगीतकम्—

ईशचन्द्र११मात्रिकम्,
वर्णतस्तुकान्तकम्,
शर५पदेषु साधकम् ।
लोचन१२चन्द्रगणनया,
यद् गुणाङ्कितपादया,
नीतिनामकगीतया,

साधंमष्ट८पादकम्,
कथ्यते प्रगीतकम् ।६६।

यथा—

पतंग: स्वतो ज्वलति,
दीपकेन सार्धमिति,
ऊर्मिगङ्गत: सरति ।
श्वासमितो बाष्पमितो
ज्वलनमितो दाहमितो
हृदङ्कितो ह्यग्निमितो
ज्वालशतमित: कथम् ?
दीपक: स्मित: कथम् ?
—काव्यकिरणावलि: ८/११/१

५१- सुजाता—

चतुर्दश१४मात्रिकं गणनैर्भिन्नयतिकान्यत्र ।
चतुर्विंशति२४मात्रिकानि च षट्पदानि तु यत्र ।।
सप्तमाष्टमयोश्च पदयो: सिद्धिनयना२८ङ्कौ च ।
मात्रया भूषितौ यस्यां गीतिकायां द्वौ च ।।
तुकान्ता अष्टापि पादा: परस्परमायान्ति ।
अक्षराणि लघूनि षट्सु च पदान्ते विलसन्ति ।।
तामहं गीतिं सुभद्रे ! त्वष्टपदिकामिह सृजामि ।
तामहं छन्दसां शास्त्रे सुजातां कर्णय, वदामि ।७०।

यथा —

कुमलिनानि सुवर्णस्वाप्निकमृदुलपुष्पान्यद्य ।
धूलिका व्याप्नोद्धि पलकान् चितायां आच्छाद्य ॥
मधुस्मितिरथ भावनानामितो वै निरगाद्धि ।
जीवनीयं मधुरगीतं शिथिलतामायाद्धि ॥
श्रावणीवर्षयमद्य च नयनपुलिनं प्राप्य ।
कृष्णदोषाऽतिष्ठदिह मे तारिके द्वे व्याप्य ॥
दीयते ते स्नेहप्रीत्या प्राणदीप्तिर्मामकीना ।
मधुस्मितमर्पयति मह्यं चितौ स्मृतिरिह तावकीना ॥

—काव्यकिरणावलिः- ८/१८/१

# अर्धसममात्रिकनवपदी ।

## ५२- श्रुतकीर्ति —

यस्यां गीतौ नवपादाः शृणु छन्दोज्ञे ! प्रभवन्ति ।
सप्तमपादं त्यक्त्वा सर्वे तुकान्तभा विलसन्ति ॥
प्रथमपादतः सप्तमपादं यावत्त्वष्टविंशतिः२८ ।
मात्रा यासु पृथक् षोडशभिर्द्वादशभिस्तथा यतिः ॥
अष्टमनवमपादयो र्मात्रा द्वात्रिंश३२च्च भवन्ति ।
षोडश षोडश यत्या भिन्ना मात्रा इह विरमन्ति ॥
लयभा पृथक् सप्तपादेषु प्रभवति पृथक् चरमयोः ।
तां गीतिं श्रुतकीर्ति ललने ! कथयेस्त्वं यदि वक्तुं शक्ता ।
शत्रुघ्नस्य तु जायां केचिच्छिष्या उच्चरन्ति मद्भक्ताः ॥७१॥

यथा—सरलजीवनीया परिभाषा वक्तुं नैव शक्यते ।
सर्वे मधु वाञ्छन्ति परन्नो गरलं केन पीयते ?
विषाधरैरधिकारो मधुनः पाने तस्य मुख्यतः ।
अभिलाषं विषपानीय यो मनसा खलु गतस्ततः ।
मृतोऽपि मरणाद् बिभेति यो ना, मृतः स एव कथ्यते ।
जीवितहृदा नरेण मृत्युतो नैव कदापि त्रस्यते ।।
लघुपिपीलिकागतिर्मार्गं शक्ष्यति मापयितुन्नो ।
झञ्झागतो स्वकीया आशा मेलय मेलयितुं यदि शक्तः ।
परिपाटीः प्राचीनयुगीनास्त्रोटय त्रोटयितुं यदि शक्तः ।।
—काव्यकिरणावलिः ८/५/१

## अथ विषममात्रिकचतुष्पद्यः ।

### ५३- तारा— (१५, १५, १३, १२ मात्राः)

पञ्चादश पादयो मात्राः
प्रथमे द्वितीये द्वयोस्तथा ।
अन्तिमपदयोस्त्रयोदश
द्वादश च तारा यथा ।७२।

यथा— इदमासीत्तस्य भाग्यं यद
येन स हृयस्तद्वरः कृतः ।
परमद्य स तया त्यक्तो
नगराण्यटितुमुद्यतः ।।
—विद्योत्तमाकालिदासीयम्-१०/३१

५४- माण्डवी—

यस्याः पदे क्वापि वसुदश¹⁸कलाश्च
क्वाप्यूनविंशति¹⁹र्मात्रा भवेयुः।
क्वापि सप्तदश¹⁷ समयोस्तुकान्ताम्,
बुधा माण्डवीं तां गीतिं वदेयुः ।७३।

यथा— ललामभूता भुवनेषु या सा,
गङ्गादुकूलावृतपादभागा ।
ब्रूते मनुष्यं निजपार्श्वमागतम्,
भजस्व शर्वं निवसेह मा गाः ।।
—विद्योत्तमाकालिदासीयम् १/२

५५- उर्मिला— (२८, २८, २६, १५)

षोडश¹⁶ यस्यां प्रथमपादयो र्मात्रा अष्टविंशतिः²⁸ ।
षड्विंशतिस्²⁶ तृतीये पादे क्वापि च सप्तविंशतिः²⁷ ।।
पादे चतुर्थके च पञ्चदश¹⁵ षोडश¹⁶ वा, पदजाम्,
उर्मिला कुरुते तुकान्तभाम् ।७४।

यथा— यत्र मया काव्यानि कृतानि त्वमेव सा कविताभूः ।
त्वया कृतोऽहं कविः कविप्रिये ! त्वं कविकामा मा भूः ।।
रक्ष कवित्वं मे, त्वद्विरहो जनयति मे कविताम् ।
गच्छ काशीं त्वं विस्मर माम् ।।
—विद्योत्तमाकालिदासीयम्-१६/२३

५६- सुभद्रा— नास्ति सीमा कापि यस्याम्,
मात्राणामत्र गणने ।

तुकान्ता ह्ययतुकान्ता वा,
सुभद्रा सा गीतिरुक्ता ।७५।

यथा— किञ्चिदिव साधना श्रान्ता,
अद्य मूककवे र्वाणी ।
निर्गता मौनस्वरादह !
पुरातनगाथां वदति ॥
—काव्यकिरणावलिः ६/२२/१

## अथ विषममात्रिकपञ्चपद्यौ ।

५५- अपाला— यस्याः पञ्चसु पदेषु गणना,
मात्राणामनिश्चिता ।
अपाला सा गीतिरुक्ता ।
चरमयो पादयोरन्तः,
चतुर्थपञ्चमयोस्तुकान्तः ।७६।

यथा— विरहानले ज्वलावस्थायाम्,
उत्कामाः कम्पन्ते ।
अन्योऽन्यं मेलितु व्याकुलाः,
सन्ति प्राणा नो !
कोकिल ! त्वमहं चैकसमानौ ॥
काव्यकिरणावलिः- ६/११/१

५८- सीता— (२८, २८, २८, २७, १६)
प्रथमः पादो द्वितीयपादं गच्छति यत्र तुकभया ।
त्रिषु पादेषु सिद्धिनेत्रा२८ङ्कितमात्राः प्रिये ! हरति या ॥

२७सप्तविंशतिश्चतुर्थपादे पञ्चमे च ताः षोडश१६
चतुर्थपादो लभते पञ्चमपादे तुकान्तधाम ।
वदामि तामहं शुभे ! सीताम् ।७७।

यथा—

त्वां विना न मम कोऽपि जगत्यामेकस्त्वमेव बन्धुः ।
मैत्रीं यातः सखा सर्वतो रक्षककरुणासिन्धुः ॥
नारिकेलकर्कन्धुसमोऽन्तः कोमलकठिनतामितः ।
गतिं विचार्य परामर्शं मे देहि शुभ्र घन-श्याम !
इतो मामवलोकय मे राम !

—काव्यकिरणावलिः ५/२/२

## अथ विषममात्रिकषट्पदी ।

५९- पादषट्कम् – (२२, २२, २२, २२, २३, ११)

यत्र गीतके सदा पादषट्कमिह भवेत् ।
तच्च रुद्र११मात्रया पादयतिरतिं व्रजेत् ।
षट्पदेषु द्विधाऽर्धे समतुकान्तभा लसेत् ॥

११+११=२२

रुद्ररुद्रयोगजाः कलाश्चतुष्पादजाः ।

११+१२=२३

पञ्चमे पदे तथा रुद्राऽऽदित्यमिश्रजाः ।
षष्ठके च रुद्र११जाः ।७८।

यथा—

अम्बरेऽस्ति मौनता भुवि तुषारबिन्दुता ।

नूतनपत्रदूर्वयोः कल्पना सुरञ्जिता ।

अधिगता मया नलिनरागिणी नवीनता ।।

पीडलाडतास्तिरी ! प्रीतिरी ! सुरीतिरी !

प्रेमलापतृप्तिरी ! तृषा च जाग्रितोदरी ।

व्यापगता विभावरी ।।

—काव्यकिरणावलिः - ८/१२/१

# समत्रिपादचतुष्पद्यौ

६०- प्रेमकन्दम्—

चतुर्दशमात्राश्चतुर्थे यस्य पादे सुशोभन्ते ।

शेषपादेष्वष्टविंशतिरत्रमात्रा विराजन्ते ।।

मध्ययतिकं मन्दगतिकं भाति यद् वृत्ताऽरविन्दम् ।

वेद्मि तदहं प्रेमकन्दम् ।।७६।।

यथा मम विद्योत्तमाकालिदासीये महाकाव्ये सप्तदशे सर्गे —

भावयोः सङ्गमनिशेयं द्वयोरेकत्वं करोति ।

चन्द्रिकालोकिता या नौ द्वयोरानन्दं तनोति ।

कामक्रीडक रसिक ! मन्ये त्वां मनोहरकलाकन्दम् ।

ब्रूहि प्रियतम ! मन्दमन्दम् ।।२/२।।

६१- मृकान्ता—

३२ नेत्रकालमात्राङ्कितपादा यस्यां त्रिगुणसंख्यका भवन्ति ।

१६ रसचन्द्राङ्कितमात्रायुक्ता यत्र सदा यतयो विलसन्ति ।।

षोडशान्तपादे समत्रिपादचतुष्पदीमधुना रचयामि ।

तामहं सुकान्तां कथयामि ॥८०॥

यथा मम विद्योत्तमाकालिदासीये महाकाव्ये सप्तदशे सर्गे—

उज्जयिनीश्वरलोकपालको यत्र महाकालेश्वरदेवः ।

प्रजापूजितो निवसति भगवान्नरेशविक्रमकरकृतसेवः ॥

कृत्वा तद्दर्शनं प्राप्नुहि स्वास्थ्यवर्धकं शीतसमीरम् ।

एहि, चल प्रिये ! क्षिप्रातीरम् ॥६/१

## समचतुष्पादपञ्चपदी

६२- पदयात्रा—

छन्दोऽत्र सुभगे शृणु कान्ते ! द्वात्रिंशत्सन्ति यत्र मात्राः ।

पादेषु चतुर्षु तथा षोडशमात्राः पञ्चमे, भवति यात्रा ॥

षोडशमात्राभिर्यतिभिन्ना सा चलति सदा तुकान्तगात्रा ।

सममात्रिकनवपदिकामेतामधुना कथयन्ति सम छात्राः ॥

वृत्तेषु लसति सा पदयात्रा ॥८१॥

यथा मम विद्योत्तमाकालिदासीये महाकाव्ये सप्तदशे सर्गे—

निजवंशवृद्धये शृणु सुभगे ! त्वं भव सर्वथा कामयित्री ।

निर्माताऽहं शुक्राणूनां त्वं रजःकणानां जनयित्री ॥

रचयिता यथाऽहं काव्यानां त्वं भवेः शिशूनां रचयित्री ।

शैशवकलरवकेलिभिरनिशं भव भवने प्रहर्षजनयित्री ॥

कविरहं भवेस्त्वं कवयित्री ॥४॥

एतद्वृत्तातिरिक्तानि यानि वृत्तानि संस्कृते ।

तान्यप्यन्वेषणीयानि क्रियन्ते कविभिर्नवैः ॥८२॥

अनुसन्धानमत्याज्यं छन्दोज्ञैस्तत्कृतिकृते ।
छन्दःशास्त्रमहाग्रन्थो येन भवितुमर्हति ॥८३॥
कलावतीतनूजेन होतीलालकृतात्मना ।
रामकिशोरमिश्रेण सोरोंनगरवासिना ॥८४॥
(२०४०) खाब्धिखाक्षिवैक्रमाब्दे शुक्लाषाडे दिशा१०दिनैः ।
वृत्तानुसन्धानं नाम छन्दोग्रन्थो मया कृतः ॥८५॥
अन्ते वृत्तत्रयं कृत्वा चन्द्राब्धिखाक्षि२०४१वत्सरे ।
प्रथमभागसंयुक्ता छन्दस्कलावती कृता ॥८६॥

— ० —

# छन्दस्कलावती

## द्वितीय भागः

# छन्दोऽनुसन्धानम्

पतञ्जलिशौनकाभ्यां कात्यायनभरतपिङ्गलाचार्यैः ।
श्रीजनाश्रयजयदेवस्वयम्भूजयकीर्तिविरहाङ्कैः ।१।
श्रीक्षेमेन्द्रकेदारहेमचन्द्रदामोदरमिश्रैश्च ।
गङ्गादासादिचन्द्रशेखरश्रीकृष्णभट्टैश्च ।२।
श्रीदुःखभञ्जनेन च रचिताश्छन्दोलक्षणग्रन्था ये ।
तानधीत्य मया कृतमेतच्छन्दोऽनुसन्धानम् ।
बहूनां छान्दसैस्तत्र छन्दसां लक्षणं कृतम् ।

तच्छन्दोजातमत्रास्ति यदन्यत्र न दृश्यते ।४।
यच्छन्दयति छादयति भावानक्षरमात्रावर्णगणैः ।
ध्वनिलयार्थैर्जनचित्तमाह्लादयति च हि तच्छन्दः ।५।
तान्यलक्षितछन्दांसि यानि लक्षणरचनासु नैव सन्ति ।
तेषामत्र नामानि क्रियन्ते लक्षणानि च मया ।६।

## समपादछन्दांसि

१- निरूपणम्—

। ऽ । ऽ ऽ । ऽ । ऽ ऽ

जतौ रगू चेन्निरूपणं तत् ।७।

यथा— उदङ्मुख तद्रथ त्रकार ।

—वाल्मीकीयरामायणम्-२/२६/२४, तृतीयचरणम् ।

२- कस्तूरी—

ऽ ऽ ऽ ऽ । । । । । । । । । ऽ

कस्तूरी सा भवति मभननलगुभिः ।८।

यथा— रामः संशोद्य ऋषिगणमनुगमनात् ।

—वाल्मीकीयरामायणम्-२/१२६/२५, प्रथमचरणम् ।

ऽ ऽ ऽ ऽ । । । । । ऽ । । ऽ

३- राजेश :— राजेशो वै मभनजलगुभी रमते ।९।

यथा— देशात्तस्मात्कुलपतिमभि वाथ ऋषिम् ।

—वा० रा०—२/११६/३५, द्वितीयचरणम् ।

ऽ । ऽ । । । । । । ऽ । ऽ

४- साधना— साधना रनसलगुभि र्भवेत् ।१०।

यथा— आश्रमं त्वृषि विरचितं प्रभुः ।

—वा० रा० २/११६/२६, प्रथमचरणम् ।

। । । । । । । । ऽ । ऽ । ऽ

५- किशोरक :— स भवति ननजरैः किशोरकः ।११।

यथा— क्षणमपि न विजहौ स राघवः ।।

—वा० रा०—२/११६/३६, द्वितीयचरणम् ।

ऽ । ऽ । । । । । । । ऽ

६- भैरवः— भैरवोऽस्ति स रननलगुभिः ।१२।

यथा — राघवं हि सततमनुगताः ।

—वा० रा० २/११६/२६, तृतीयचरणम् ।

ऽ । ऽ ऽ । । । । । । ऽ

७- श्रीमती- श्रीमती साऽस्ति रभनसगणैः ।१३।

यथा— तादृशाश्वर्षिचरितधृतगुणाः ।

—वा० रा० २/११६/२६ चतुर्थचरणम् ।

। । । । ऽ ऽ । । ऽ । ऽ । ऽ

८- कलावती— नयसजगै र्याति कृतिः कलावती ।१४।

यथा— इतिरवदोषान् परिकीर्तितांस्तथा ।

—वा० रा० २/३३/२४, प्रथमचरणम् ।

ऽ । । । । ऽ । । ऽ । ऽ । ऽ ऽ

९- पवनः— यत्र भससजाः पवनस्ततो गुरू चेत् ।१५।

यथा— तद्ध्वजगहनं गहनं महारथैश्च ।

—वा० रा० ६/८५/३६, द्वितीयचरणम् ।

I I I I I I I I S I S S

१०- सुशीला— भवति ननसययुता सुशीला ।१६।

यथा— अथ स रणविगतमृत्तमोजाः ।

—वा० रा० ७/२६/३७, प्रथमचरणम् ।

I I I I I I I S I S I S

११- रञ्जना — प्रभवति ननजरैस्तु रञ्जना ।१७।

यथा — यदयमतुलबलस्त्वया च वै ।

— वा० रा० ७/२६/३८, तृतीयचरणम् ।

I S I S S I I I S I S

१२- प्रफुल्लकम्— प्रफुल्लकं यत्र च जतौ गुरुः ।१८।

यथा— सदेवगन्धर्व ऋषियक्षराक्षसैः ।

—वा० रा० ७/३५/६५, चतुर्थचरणम् ।

I I S I I S I S S

१४- यतनम्— समयैर्यतनं भवेत्तत् ।१९।

यथा— इति राम निवेदितं तु ।

—वा० रा०७ /६१/२४, प्रथमचरणम् ।

S S I S S S I S S I S S

१४- पुष्पा— पुष्पा प्रकीर्णा सा तमाभ्यां यमाभ्याम् ।२०।

यथा— अङ्गैः प्रकृष्टैः कार्यसिद्धि विदित्वा ।

—वा० रा० ५/६३/३३, तृतीयचरणम् ।

I S I S S I S S I S S

१५- सौभाग्यवती— जतौ तगौ गश्च सौभाग्यवत्याम् ।२१।

यथा— युधिष्ठिरः सौबलेनाऽक्षमन्माम् ।

—महाभारतम्, उद्योगपर्व-१/१०, द्वितीयचरणम् ।

S S S S S I I S I S S

**१६- यतीन्द्रदेवी— मस्तो जो गौ चाथ यतीन्द्रदेवी ।२२।**

यथा— स्वर्गाल्लोकाद् भ्रश्यति नष्टचेष्टः ।।

—महाभारतम्, उद्योग०-१२/२०, प्रथमचरणम् ।

I I S S I I S S I S S

**१७- सत्यवती— लभते सत्यवती सं भतौ गौ ।२३।**

यथा— अवरुद्धा रथिनः केकयेभ्यः ।।

—महाभारतम्, उद्योग०-२२/२०, प्रथमचरणम् ।

I S I S S S I I S I S S

**१८- शकुन्तला— शकुन्तला प्राप्नोति जमौ सयौ च ।२४।**

यथा— न तस्य बीजं रोहति रोहकाले ।।

—महाभारतम्, उद्योग०-१२/१६, प्रथमचरणम् ।

S S S S S I I S S I S S

**गङ्गा— गङ्गा छन्दोऽभ्येति मताभ्यां ययाभ्याम् ।२५।**

यथा— राजा देवानां नहुषो घोररूपः ।।

— महाभारतम् उद्योग०—१६/३०, प्रथमचरणम् ।

I S I S I S I I S S I S S

**२०- राजबाला- करोति या जरौ सरगान् राजबाला ।२६।**

यथा— रिपुं जयाय त नहुष घोरदृष्टिम् ।।

—महाभारतम्, उद्योग०—१६/३२, द्वितीयचरणम् ।

S I S S I I S S I S S

**२१- अर्चना— अर्चना सा रभता गौ च यस्मिन् ।२७।**

यथा – कः स्विदेको रमते ब्राह्मणानाम् ।।

—महाभारतम्, शान्तिपर्व-२९९/४१, सम्पूर्णपद्यम् ।

।S S S। । S S । S S

२२— रमा सा यत्र यभौ तौ गुरू च ।२८।

यथा— गुरुं शिष्यो वरयेद् गोप्रदाने ।।

—महाभारतम्, अनुशासनपर्व— ७१/५५, सम्पूर्णपद्यम् ।

# असमपादच्छन्दांसि

## २३- पार्वती—

।। ।। ।।S ।S।S ।।।।S।।S ।S।S S

यदि नन रलगा अथाऽसमे, नजजरगाश्चसमे हि पार्वती सा ।२९।

यथा— स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्यः ।।

—महाभारतम्, शान्तिपर्व–३६५/६, सम्पूर्णपद्यम् ।

## २४- विषमगतिः—

प्रथमे मसजभा गुरू ननरसगाश्च पादे द्वितीये स्युः ।

ननसननलगाश्चाग्रे ननजया विषमगतिरन्ते ।३०।

यथा —

S SS ।।S।S।S। ।SS ।।।।।।S।S।।S S

यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः सततनिकृतिबन्धनाभिरतिः स्यात् ।

।।। ।।।।S। ।।।।।S ।।।।।।।।। S।।SS

उपनिधिभिरसुखकृत्स परमनिरयगो, भृशमसुखमनुभवति दुष्कृतकर्मा ।।

—महाभारतम्, शान्तिपर्व-३२१/३१

२५-चतुष्करम् - पूर्वं ननजरगाः स्युर्नजजाश्च रगौ ततः ।

ननरया नजौ जरौ क्रमशस्तच्चतुष्करम् ।३१।

यथा—

।।।।।।।ऽ।ऽ।ऽऽ ।।।।ऽ।।ऽ।ऽ।ऽऽ

यदुपनिषदमुपाकरोत्तथासौ, जनकनृपस्य पुरा हि याज्ञवल्क्यः ।

।।।।।।ऽ।ऽ।ऽऽ।।।।ऽ।।ऽ।ऽ।ऽ

यदुपगमितशाश्वताव्ययं तच्छुभममृतत्वमशोकमर्च्छति ।।

महाभारतम्, शान्तिपर्व-३१८/११२

**महाभारतवृत्तानि बहून्यलक्षितानि हि ।**
**अपेक्षितोऽस्ति शोधोऽत्र छन्दःशास्त्रं प्रवर्धताम् ।३२।**

# नूतनमात्रिकच्छन्दांसि

**बहुच्छन्दांसि दृश्यन्ते संस्कृतपत्रिकासु च ।**
**ताभ्यो मात्रिकवृत्तानि प्रदर्श्यन्तेऽत्र कानिचित् ।३३।**

२६- प्रतिभा—

**प्रथमे चतुर्दशाऽन्ते चतुष्षु त्रिंशत् षोडशे च विरतिः ।**
**प्रथमान्तिमान्तमैत्री मध्ये तुकान्ता सा प्रतिभा ।३५।**

यथा— पथिक ! न पथो विचलितव्यम् ।
कामं पथि पथि कण्टकगुल्मा एव विकीर्णा भूरि स्युः ।
पदे पदे तव गतिमभिरोद्धुं तुङ्गशिखरिणस्तिष्ठेयुः ।।
निर्जनभीषणकान्तारा अपि गह्वराणि वाऽऽगच्छेयुः ।
विघ्नैरपि हसता हसता भोस्त्वयाऽविरतमभिगन्तव्यम् । २।।

वेदकुमारीकृतं जीवनपथिक प्रति—२

विश्वसंस्कृतम् (नवाम्बरः, १९७२) साधुआश्रमः, होश्यारपुरम् ।

२७- त्रिचला—

विंशतिः षोडश त्रयोविंशतिश्च मात्राः पादत्रये ।
त्रयोदशेऽन्तिमे यतिः पूर्वयोर्मैत्री सा त्रिचला ।३५।

यथा— क्षपयसि निजदेहं विहरज्जनपापम् ।
दिनकरदहनविहितमपि तापम् ।
शङ्करधृतसलिलशरीर ! विरचय शर्म जने ।।२।।

श्रीरामजिद्भट्टकृतोऽष्टमूर्तिस्तवः – २
सङ्गमनी, शिशिराङ्कः, वि० सं० २०२३, प्रयागः ।

२८- चतुष्पदा—

द्वाविंशतिस्तु पूर्वे चतुर्विंशतिश्च ततः प्रतिपादम् ।
मध्ययतिरन्तमैत्री सा भवति चतुष्पदा गीतिः ।३६।

यथा — वन्दना विधीयतां श्रद्धया समर्च्यताम् ।
स्वराष्ट्रगीतिरागिणी दिवानिशं सुगीयताम् ।।
स्वमातृभूमिरर्च्यतां स्वभावितं निगद्यताम् ।
स्वदेशवासिनो जनाः ! स्वसंस्कृतिर्निधीयताम् ।। ३ ।।

अभयसोमराजकृतं सैन्यगीतम् – ३
जयतु संस्कृतम् (वैशाखः, संवत् २०२१) काष्ठमण्डपः, नयपालः ।

## लोकगीतध्वनितच्छन्दांसि

कैश्चित्कविभिराश्रित्य लोकगीतध्वनिं कृताः ।
काश्चिच्छन्दोरचना या लक्ष्यन्ते तासु काश्चन ।३७।

२९- प्रदीपगीतम्—

पूर्वार्द्धे प्रतिपादं षोडशोत्तरार्द्धे त्रयोदश कलाः ।
बहाररागनिबद्धं तुकान्तं तत्प्रदीपगीतम् ।३८।

यथा— कुङ्कुमरागविभूषितभाले,
चलदधरीकृतमुदितमराले ।
प्रियसुखमनुभव मञ्जुले,
चल वामे चल चञ्चले ।।२।।

श्रीजगदीचन्द्रकृता प्रियदर्शनोत्सुका-२,
संस्कृतप्रतिभा (अप्रियल: १९५९) नवदेहलीत: प्रकाशिता ।

३०- विषमपथम्—

पादत्रये प्रतिपदं षोडश तुर्ये दशान्ते पञ्चदश ।
त्यक्ततृतीयतुकान्तं लोकध्वनिकृतं विषमपथम् ।३९।

यथा— शीततापसुनियन्त्रितभवने,
केऽपि शेरते विद्युत्पवने ।
कर्मान्तेषु तपन्ति केऽपि धुरि,
यन्त्राणां ज्वलताम् ।
कियत्कथयान्यार्धि जगताम् ।।३।।

श्रीव्रजमोहनझाकृता विषमता-३
संस्कृतप्रतिभा (अप्रियल: १९५९) नवदेहलीत: प्रकाशिता ।

३१- धरा—

प्रतिपदविंशतिमात्रा दशयतिका त्यक्ततृतीयतुकान्ता ।
तृतीययमकभरा सा केदाररागबद्धा धरा ।४०।

यथा— मदनमन्दिरधृता गोण्डवनराधिका,
कौशलानामसौ देवता शासिका ।
देहलीवर्णनं श्रवणकटुकर्णनम्,
परिणमतु मा ततो गोपशोकान्तिका ।
श्री वी. भि. वेलणकरकृता राज्ञी दुर्गावती नाटिका—१/४,
अमृतलता (मार्च १९६५) पारडी (गुजरातप्रदेशः) ।

छन्दोग्रन्थेषु पूर्वेषु सन्ति छन्दांसि तान्यपि ।
येषां नास्ति प्रयोगोऽपि काव्येषु नाटकेषु च ।४१।
परमस्मिन् मया ग्रन्थे तच्छन्दोलक्षणं कृतम् ।
यत्प्रयोगः स्वकाव्येषु कविभिः सादरः कृतः ।४२।
आधुनिकासु लभ्यन्ते संस्कृतपत्रिकासु च ।
बहूनि तानि छन्दांसि सन्ति यानि नवानि हि ।४३।
सर्वेषामपि तेषां चेत् क्रियेरन् लक्षणानि तत् ।
छन्दःशास्त्रमहाग्रन्थ एको भवितुमर्हति ।४४।
अनुसन्धानमत्याज्यं छन्दोज्ञैस्तत्कृतिकृते ।
(२०३९) ग्रहकालखनेत्राब्दे वैक्रमे शुक्लचैत्रके ।४५।
कलावतीतनूजेन हीरालालकृतात्मना ।
रामकिशोरमिश्रेण छन्दोग्रन्थस्त्वयं कृतः ।४६।
एनमन्ते च सम्मेल्य चन्द्राब्धिखात्म २०४१ वत्सरे ।
द्वितीयभागसंयुक्ता छन्दस्कलावती कृता ।४७।

—:०:—

# छन्दस्कलावती

## तृतीयभागः

# छान्दसपरम्परा

छन्दो वैदिकषडङ्गेषु गण्यते । यथा वेदस्याऽन्यान्यङ्गानि महत्त्वपूर्णानि सन्ति, तथैवच्छन्दोमहत्त्वमपि न कस्मादप्यङ्गान्न्यूनम् । छन्दो वेदस्य पादौ कथ्यते१ । यथा पादरहितो जनो गन्तुमसमर्थो भवति, तथैवच्छन्दो विना वेदस्य गतिरपि न भवति । यदा छन्दसां विकासोऽभवत्तदानीमेव तत्सुरक्षार्थं छान्दसाऽऽचार्या नियमान् रचितुं प्रारभन्त ।

छन्दसां ब्राह्मणग्रन्थेषु समुल्लेखानन्तरं शाङ्खायनश्रौतसूत्रे सर्वप्रथमं छन्दःशास्त्रीयचर्चा प्राप्यते । अत्र गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति नाम्ना सप्तच्छन्दांसि सङ्केतितानि । छन्दोनामभ्यः पूर्वं त्रिपदापुरःककुब्विराट्सतोनिचृद्भूरिगित्यादिनामोल्लेखैः सह केषाञ्चिच्छन्दसां पादा अक्षराश्चापि गण्यन्ते२ । तदनन्तरं पातञ्जलनिदानसूत्रे शौनकीये ऋक्प्रातिशाख्ये कात्यायनकृतायामृक्सर्वानुक्रमण्याञ्चैतानि छन्दांसि विचार्यन्ते । कतिपयच्छन्दःप्रवक्तृनामोल्लेखः पिङ्गलीये छन्दःसूत्रेऽपि लभ्यते, यथा ताण्डी, क्रौष्टुकिः, यास्कः, सैतवः, काश्यपः, शाकल्यः, रातः, माण्डव्यश्चेति३ । किन्तु तेषां छन्दःशास्त्रीयग्रन्था नैव प्राप्यन्ते ।

वैदिकयुगारम्भाद्वैदिकयुगसमाप्तिपर्यन्तं प्रसिद्धिं गतानि छन्दांसि प्रवक्तृभिराचार्यैस्तन्नियमैर्नियन्त्रितानि । प्राचीनसंस्कृतवाङ्मये छन्दःशास्त्र-

---

१– "छन्दः पादौ तु वेदस्य ।" पाणिनीयशिक्षा– ४१

२– शाङ्खायनश्रौतसूत्रम्— ६/४/५६, ७२/२२/२५–२८, ७/२७/१२, ३०, १६/२७/२, १६/२८/२

३– छन्दःसूत्रम्— ६/२६, ३०, ३४, ४/१८, ७/६, ११, ३३, ३४

स्या ऽनेकानि नामानि प्राप्यन्ते, यथा- छन्दोविचितिः, छन्दोनाम, छन्दोभाषा छन्दोविजिनी, छन्दोविजितिः, छन्दोव्याख्यानं चेति४। छन्दःशास्त्रोद्भवकालोऽतिप्राचीनोऽस्ति। अस्य शास्त्रस्य प्रादुर्भावकालोऽपि स एव, योऽन्येषां वेदाङ्गानामस्ति। वेदाङ्गप्रादुर्भावो न्यूनातिन्यूनैकादशसहस्रवर्षपूर्वं कृतयुगान्तेऽभवत्५। वेदाङ्गोल्लेखः प्राचीनग्रन्थेषु प्राप्यते६। पाश्चात्यविद्वांसः सूत्रकालानन्तरं छन्दःशास्त्रप्रादुर्भावं मन्यन्ते, ततोऽनेकशताब्दीपर्यन्तं च तस्य विकासं स्वीकुर्वन्ति। तेषां मतेन द्विशताधिके यीशुपूर्वकाले पिङ्गलेन छन्दोनियामकं छन्दःसूत्रं कृतम्७। वस्तुतस्तु छन्दःशास्त्रस्य प्रादुर्भावो न सूत्रकालानन्तरमभवत्, न च पिङ्गलीयं छन्दःसूत्रं छन्दःशास्त्रस्याऽऽद्यग्रन्थः। पिङ्गलेन स्वग्रन्थेऽनेके छन्दः प्रवक्तार उल्लिखिताः सन्ति८।

निदानसूत्रे सप्तानां छान्दसाचार्याणां मतानि "पाञ्चालाः, एके, उदाहरन्ति, बह्वृचाः, आचक्षते, ब्रुवते, प्रतिजानते" इति साङ्केतिकपदैरुद्धृतानि९। छन्दःसूत्रेऽष्टाऽऽचार्याः समुल्लिखिताः। उपनिदानसूत्रे सप्ताऽऽचार्याः सङ्केतिताः सन्ति, यथा — ज्योतिष्मतीति पाञ्चालाः, उरोबृहतीति यास्कः, महाबृहतीत्येके, द्विपदा विस्तारपङ्क्तिश्च ताण्डिनः। तथा च—

---

४- पाणिनीयगणपाठः — ४/३/७३ जैनेन्द्रगणपाठः — ३/३/४७, जैनशाकटायनगणपाठः — ३/१/१३६, चान्द्रगणपाठः — ३/१/४५, गणरत्नमहोदधिः — ५/३४४, सरस्वतीकण्ठाभरणम् — ४/३,

५- युधिष्ठिरमीमांसककृता वैदिकच्छन्दोमीमांसा, पृष्ठाः — ४५.

६- बौधायनधर्मसूत्रम् — २/१४/२, गौतमधर्मसूत्रम् — १५/२८, गोपथब्राह्मणम् — १/१/२७, वाल्मीकीयरामायणबालकाण्डम् — ७/१५.

७- Ancient India and Iudian civilisation, London, 1951, P. 263,

८- छन्दः सूत्रम् — ३/२९, ३०, ३६, ५/१८, ७/९, १०, ११, ३६.

९- निदानसूत्रम् — १, २, ३, ४, ५, ६, ७, पृष्ठानि द्रष्टव्यानि।

ब्राह्मणात्ताण्डिनश्चैव पिङ्गलाच्च महात्मनः ।
निदानादुक्थशास्त्राच्च छन्दसां ज्ञानमुद्धृतम्[१०] ॥

छन्दोऽनुशासने जयकीर्तिना दशप्राचीनाऽऽचार्याणां यतिविषयकं स्मरणं कृतम्—

वाञ्छन्ति यतिं पिङ्गलवशिष्ठकौण्डिन्यकपिलकम्बलमुनयः ॥
नेच्छन्ति भरतकोहलपाण्डव्याऽश्वतरसैतवाद्याः केचित् ॥

हेमचन्द्रेण स्वग्रन्थे छन्दोऽनुशासनेऽप्यहीन्द्रसैतवभरतकाश्यपपिङ्गलजयदेवस्वयम्भुव इति सप्तपूर्वाचार्याणां नामानि गृहीतानि, "केचित्कश्चिद-न्योऽन्येऽपर एके, पूर्वाचार्याः, मागधाः, आम्नायः, यदाह, यदाहुः, वृद्धाः, सग्रहश्लोकाः, यत्युपदेशोपनिषच्चेतिसाङ्केतिकपदैश्चतुर्दशानां पूर्वाचार्याणां मतानि प्रकटितानि । छन्दःसूत्रस्य भाष्यकृता यादवप्रकाशेन भाष्यान्ते छन्दः-शास्त्रपरम्परादर्शकोऽयं श्लोकः समुल्लिखितः । यथा—

छन्दोज्ञानमिदं भवाद् भगवतो लेभे सुराणां गुरु—
स्तस्माद् दुश्च्यवनस्ततः सुरपतिर्माण्डव्यनामा ततः ।
माण्डव्यादपि सैतवस्तत ऋषिर्यास्कस्ततः पिङ्गल—
स्तस्येदं यशसा गुरोर्भुवि धृतं प्राप्याऽस्मदाद्यैः क्रमात् ॥

छन्दोमञ्जर्यां गङ्गादासो यतिविरोधे श्वेतमाण्डव्यादिमतप्रकाशानन्तरं यतिसमर्थने स्वगुरुं पुरुषोत्तमभट्टमस्मरत्[११] । राजवार्तिककारस्तु छन्दःशास्त्रपरम्परासूचकमेकमन्यमुल्लेखमकरोत् —

शिवगिरिजानन्दिफणीन्द्रबृहस्पतिच्यवनशुक्रमाण्डव्याः ।
सैतवपिङ्गलगरुडप्रमुखा आद्या जयन्ति गुरुचरणाः ॥

---

१०. उपनिदानसूत्रम्— ८/१

११. छन्दोमञ्जरी— १/१४

यादवप्रकाशकृते छन्दःसूत्रभाष्येऽपरमेकं छन्दःशास्त्रपरम्पराप्रदर्शकं पद्यं प्राप्यते । यथा —

**छन्दःशास्त्रमिदं पुरा त्रिनयनाल्लेभे गुहश्चाऽऽदित —**
**स्तस्मात्प्राप सनत्कुमारमुनिभिस्तेभ्यः सुराणां गुरुः ।**
**तस्माद्देवपतिस्ततः फणपतिस्तस्माच्च सत्पिङ्गल —**
**स्तच्छिष्यैर्बहुभिर्महात्मभिरथो मह्यां प्रतिष्ठापितम् ।।**

चन्द्रशेखरभट्टेन वृत्तमौक्तिके स्वग्रन्थरचनाधारे चतुर्णामाचार्याणां यतिनिरूपणे चाऽष्टानामाचार्याणां नामोल्लेखः कृतः१२ । युधिष्ठिरमीमांसकेन छन्दोमर्मज्ञाद् भगवतः शिवादाचार्यगार्ग्यपर्यन्तश्छन्दःप्रवक्तॄनामपौर्वापर्यक्रमो ग्रन्थिकानिर्देशानुसारेण चतुर्युगेषु विभाजितः । यथा —

| कृतयुगे | त्रेतायाम् | द्वापरे | कलियुगे |
|---|---|---|---|
| १- शिवः | १०- माण्डव्यः | १५- यास्कः | २५- उक्थशास्त्रकारः |
| २- पार्वती | ११- वसिष्ठः | १६- रातः | २६- शौनकः |
| ३- नन्दी | १२- सैतवः | १७- क्रौष्टुकिः | २७- पिङ्गलः |
| ४- गुहः | १३- भरतः | १८- कौडिन्यः | २८- कात्यायनः |
| ५- सनत्कुमारः | १४- कोहलः | १९- ताण्डी | २९- गरुडः |
| ६- बृहस्पतिः | | २०- अश्वतरः | ३०- गार्ग्यः |
| ७- इन्द्रः | | २१- कम्बलः | |
| ८- शुक्रः | | २२- काश्यपः | |
| ९- कपिलः | | २३- पाञ्चालः [बाभ्रव्यः] | |
| | | २४- पतञ्जलिः | |

शिवभक्तो नन्दी पार्वतीशिष्यः१३ कामशास्त्रस्य चाऽऽचार्यो-

१२- "रविकरपशुपतिपिङ्गलशम्भुग्रन्थान् विलोक्य निर्बन्धान् ।"
वृत्तमौक्तिकम्, पृष्ठम्– २७३

१३- वृत्तमौक्तिकभूमिका, पृष्ठम्–९, जोधपुरम्, १९६५ ई० ।

ऽभवत्[१४]। आचार्यशौनकेन स्वग्रन्थे ऋक्प्रातिशाख्ये छान्दसाचार्यरूपेण यास्क उल्लिखितः[१५]।

पिङ्गलात्पूर्वं छन्दःशास्त्र विषयकः कोऽपि स्वतन्त्रग्रन्थस्तु न प्राप्यते, किन्तु तस्मात्पूर्वं यैश्चतुर्भिराचार्यैः स्वस्वग्रन्थेषु छन्दांसि विचारितानि, ते सन्ति— भरतः, पतञ्जलिः, शौनकः, कात्यायनश्च। पिङ्गलेन येषामष्टानामाचार्याणामुल्लेखो व्यधायि, तेषां छन्दोग्रन्थास्तु न प्राप्यन्ते, केवलं नामकरणसङ्केता लभ्यन्ते। यथा—

१- क्रौष्टुकिकृत नाम— स्कन्धोग्रीवी [छन्दः सूत्रम्—३/२९]
२- यास्ककृत नाम— उरोबृहती [न्यङ्कुसारणी] छन्दः सूत्रम्—३/३०
३- ताण्डिकृतं नाम— सतोबृहती [महाबृहती] छन्दःसूत्रम्—३/३६
४- सैतवकृतं नाम— विपुलाऽनुष्टुप्, उद्धर्षिणी च [छन्दःसूत्रम्—५/१८, ७/१०
५- काश्यपकृतं नाम— सिंहोन्नता [वसन्ततिलका] छन्दः सूत्रम्— ७/९
६- शाकल्यकृतं नाम— मधुमाधवी [वसन्ततिलका] छन्दःसूत्रम्—७/११
७- माण्डव्यकृत नाम— चण्डवृष्टिप्रपातः [दण्डकः] छन्द सूत्रम्—७/३५
८- रातकृत नाम— चण्डवृष्टिप्रपातः [दण्डकः] छन्दःसूत्रम्— ७/३६

अत्र चण्डवृष्टिप्रपातो नाम दण्डको माण्डव्यस्याऽस्ति, न तु रातस्य। यतो हि माण्डव्योऽस्ति रातात्प्राचीनः। यास्ककृतोरोबृहतीच्छन्दसो नामान्तरमस्ति स्कन्धोग्रीवीति। अतः स्कन्धोग्रीवीति क्रौष्टुकिकृतं छन्दो नास्ति, तच्छन्दोऽस्ति यास्कस्य। यतो हि क्रौष्टुकिरासीद् यास्कादर्वाचीनः। इत्थमेव मधुमाधवीति काश्यपस्य सिंहोन्नता नामच्छन्दः, शाकल्येन तन्नामान्तरमेव कृतम्। पिङ्गलेनोरोबृहती न्यङ्कुसारणी कथिता, सिंहोन्नता च वसन्ततिलका नामान्तरेण प्रकाशिता, तथा सतोबृहती महाबृहती प्रोक्ता।

---

१४- वात्स्यायनकृतकामसूत्रम्—१/१/८
१५- "न दाशतय्येकपदा काचिदस्तीति वै यास्कः।" ऋक्प्रातिशाख्यम्—१७/२५

वैदिकं लौकिकं चेति द्विधाभूतं छन्दः, यस्य विवरणं चतुर्विधग्रन्थेषु प्राप्यते। एके ते ग्रन्थाः सन्ति, येऽन्यविषयैः सह छन्दोविवेचनमपि प्रस्तुवन्ति। एषु ग्रन्थेषु नाट्यशास्त्रम्, निदानसूत्रम्, ऋक्प्रातिशाख्यम्, अग्निपुराणं च मुख्याः सन्ति। अन्ये ग्रन्थाः अनुक्रमणीसाहित्यान्तर्गता वर्तन्ते। एषु शौनककृता छन्दोऽनुक्रमणी, कात्यायनकृता ऋक्सर्वानुक्रमणी, शुक्लयजुः सर्वानुक्रमसूत्रम्, बृहत्सर्वानुक्रमणी, माधवभट्टकृता ऋग्वेदानुक्रमणी, वेङ्कटमाधवकृता छन्दोऽनुक्रमणी च प्रमुखाः सन्ति, किन्तु कात्यायनकृतायामृक्सर्वानुक्रमण्यां वेङ्कटमाधवकृतायां छन्दोऽनुक्रमण्यां च छन्दोलक्षणानि प्राप्यन्ते। अन्येष्वनुक्रमणीग्रन्थेषु केवलं छन्दोविवरणमेव लभ्यते।

अपरे छन्दःशास्त्रमवलम्ब्य सर्वविधविचारपूर्वकं लक्षणोदाहरणसहिता विरचिताश्छान्दसग्रन्थाः सन्ति। तेषु पिङ्गलकृतच्छन्दःसूत्रादारभ्य प्रायः सप्तविंशतिच्छन्दोग्रन्थेषु सोदाहृतिलक्षणानि विलसन्ति। ते लक्षणग्रन्था अत्र संगृहीताः, संस्कृते प्राकृते च ये लिखिताः सन्ति। प्राकृते लिखितास्ते छन्दोलक्षणग्रन्था अत्र संगृहीताः, येषु संस्कृतच्छन्दांसि लक्षितानि सन्ति। इतरे ग्रन्थाश्छन्दोग्रन्थटीकारूपाः सन्ति। तेषु त एवाऽत्र संगृहीताः सन्ति, येषु कानिचिन्नवीनानि छन्दांसि स्वतन्त्ररूपेण लक्षितानि विद्यन्ते। इतिहाससम्पदो विवरणमत्र प्रस्तूयते—

## वैदिकच्छन्दःशास्त्रीयग्रन्थाः

१- पतञ्जलिकृतनिदानसूत्रम् [प्रायः ७०० वर्षाणि यीशुपूर्वम्]।

२- शौनककृतम् ऋक्प्रातिशाख्यम् [प्रायः ६०० वर्षाणि यीशुपूर्वम्]।

३- पिङ्गलकृतं छन्दःसूत्रम्, छन्दःशास्त्रं वा [प्रायः ४५० यीशुपूर्वम्]।

४- उपनिदानसूत्रम् [पिङ्गलात्पश्चात्]।

५- अग्निपुराणम् [पिङ्गलानन्तरम्]।

६- जयदेवच्छन्दः [सप्तमशताब्दीपूर्वार्द्धे]।

७- श्रीकृष्णभट्टकृता वृत्तमुक्तावलिः [१७४३ क्रैस्ताब्दपर्यन्तम्] ।

## वैदिकच्छन्दोऽनुक्रमणीग्रन्थौ

१- कात्यायनकृता ऋक्सर्वानुक्रमणी [प्रायः ५०० यीशुपूर्वम्] ।

२- वेङ्कटमाधवकृता छन्दोऽनुक्रमणी [द्वादशशताब्दीपर्यन्तम्] ।

## लौकिकच्छन्दःशास्त्रीयग्रन्थाः

१- भरतमुनिकृतनाट्यशास्त्रम्, १५, १६, ३२, अध्यायाः [प्रायः ५०० यीशुपूर्वम्] ।

२- पिङ्गलकृतं छन्दःसूत्रं छन्दःशास्त्रं वा [४५० यीशुपूर्वम्] ।

३- अग्निपुराणम् [पिङ्गलानन्तरम्] ।

४- कालिदासकृतः श्रुतबोधः [यीशुपूर्वप्रथमशताब्द्याम्] ।

५- जनाश्रयकृता छन्दोविचितिः [षष्ठशताब्दीपर्यन्तम्] ।

६- जयदेवकृतं जयदेवच्छन्दः [ईशवीयसप्तमशताब्दीपूर्वार्द्धे] ।

७- स्वयम्भूकृत स्वयम्भूच्छन्दः [ईशवीयाष्टमशताब्दीपर्यन्तम्] ।

८- नन्दिताड्यकृतगाथालक्षणम् [९५० क्रैस्ताब्दपर्यन्तम्] ।

९- जयकीर्तिकृतं छन्दोऽनुशासनम् [९७५ क्रैस्ताब्दापर्यन्तम्] ।

१०- विरहाङ्ककृतवृत्तजातिसमुच्चयः [१००० क्रैस्ताब्दपर्यन्तम्] ।

११- राजशेखरकृतच्छन्दःशेखरः [१००५ तः १०५० क्रैस्ताब्दमध्ये] ।

१२- क्षेमेन्द्रकृतसुवृत्ततिलकम् [१०५० तः १०७० क्रैस्ताब्दमध्ये] ।

१३- भट्टकेदारकृतवृत्तरत्नाकरः [११०० ईशवीयवर्षपर्यन्तम्] ।

१४- रत्नमञ्जूषा [अज्ञातो रचयिता, ११२५ ईशवीयपर्यन्तम्] ।

१५- हेमचन्द्रकृतं छन्दोऽनुशासनम् [११५० ईशवीयपर्यन्तम्] ।

१६- कविदर्पणः [अज्ञातो रचयिता, १२२५ ईशवीयपर्यन्तम् ] ।

१७- प्राकृतपैङ्गलम् [अज्ञातो रचयिता, १३२५ ईशवीयपर्यन्तम्] ।

१८- रत्नशेखरकृतः छन्दःकोशः [१३५० तमे क्रैस्ताब्दे] ।

१६- दामोदरमिश्रकृतं वाणीभूषणम् [१४०० तमे क्रैस्ताब्दे]।
२०- गङ्गादासकृता छन्दोमञ्जरी [१५०० ,, ,, ]।
२१- वेङ्कटेशकृता वृत्तरत्नावलिः [१५५० ,, ,, ]।
२२- भट्टचन्द्रशेखरकृतवृत्तमौक्तिकम् [प्रथमभागः, १६१८ तमे क्रैस्ताब्दे]।
लक्ष्मीनाथभट्टकृतवृत्तमौक्तिकम् [द्वितीयभागः, १६१६ ,, ,, ]।
२३- श्रीकृष्णभट्टकृता वृत्तमुक्तावलिः [१७४३ तमे क्रैस्ताब्दे]।
२४- राधादामोदरकृतः छन्दः कौस्तुभः [१८४७ ,, ,, ]।
२५- दुःखभञ्जनकृतो वाग्वल्लभः [१८८३ ,, ,, ]।
२६- दत्तदीनेशचन्द्रकृतच्छन्द सन्दोहः [१६६८ ,, ,, ]।
२७- रामकिशोरमिश्रकृता छन्दस्कलावती [२०३६ ४०, ४१ तमे वैक्रमाब्दमध्ये]।

## लौकिकच्छन्दःशास्त्रीयटीकाग्रन्थाः

१- उत्पलभट्टकृतबृहत्संहितावृत्तिः [१०३ तमोऽध्यायः, ६६६ तमे क्रैस्ताब्दे]।
२- सुल्हणकृता वृत्तरत्नाकर-सुकविहृदयानन्दिनी [११८६ ,, ,, ]।
३- जिनप्रभकृताऽजितशान्तिस्तवटीका [१३०८ ,, ,, ]।
४- रामचन्द्रविबुधकृता वृत्तरत्नाकरटीका [१६०० ,, ,, ]।
५- समयसुन्दरकृता वृत्तरत्नाकरटीका [१६३७ ,, ,, ]।
६- भास्करकृतो वृत्तरत्नाकरसेतुः [१६७५ ,, ,, ]।
७- नारायणकृता वृत्तरत्नाकरनारायणी [१६८० ,, ,, ]।
८- जनार्दनकृता वृत्तरत्नाकरभावार्थदीपिका [१७८६ ,, ,, ]।
९- देवीप्रसादकृता वाग्वल्लभवरवर्णिनी [१६२८ ,, ,, ]।

उपरलिखितेषु छन्दोग्रन्थेषु कस्य रचनाकारस्य कतिपयानि छन्दांसि तस्य स्वतन्त्ररूपेण लक्षितानि सन्तीति विज्ञातुं कालक्रमानुसारं छन्दोयोगदानविवरणमधो विलिख्यते। लघुगुरुमात्राज्ञानायैकमात्राचिह्नम्।—

तथा द्विमात्राचिह्नम्—ऽ वर्तते । अष्टगणज्ञानाय यमाताराजभानमलगं सूत्रमस्ति । अष्टगणानां नामानि चिह्नानि चेत्थं सन्ति— यगणः—।ऽऽ, मगणः—ऽऽऽ, तगणः—ऽऽ।, रगणः—ऽ।ऽ, जगणः—।ऽ।, भगणः—ऽ।।, नगणः—।।।, सगणः—।।ऽ, लघुः—।, गुरुः—ऽ च । नाट्यशास्त्रादारभ्य छन्दस्कलावतीपर्यन्तं २७छन्दोलक्षणग्रन्थेषु ९टीकाग्रस्थेषु च लौकिकच्छन्दोलक्षणकाराणां यद् योगदानं प्राप्यते, तदत्र प्रस्तूयते ।

# छन्दोयोगदानम्

## लक्षणकाराणां स्वतन्त्रलक्षितानि छन्दांसि

### १-एकाक्षरपादे द्वे छन्दसी–२

भरतस्य— ह्रीः (गः) नाट्यशास्त्रम्— ३२/४६ –४७ [इयं छन्दः सूत्रे श्रीनाम्ना लक्षिता ।]

जयकीर्तेः — नु (ल) छन्दोऽनुशासनम्— २/३

### २-द्व्यक्षरपादे चत्वारि छन्दांसि–४

भरतस्य— आदिः (गौ) नाट्यशास्त्रे ३२/४८

जयकीर्तेः — सुखम् जत्रु, वलि (छन्दोऽनुशासने-२/५, ६, ७)

### ३-त्र्यक्षरपादेऽष्ट छन्दांसि–८

भरतस्य— तटि (रः) धृतिः (यः), रजनी (सः) नाट्यशास्त्रे–३२/५०–५५

पिङ्गलस्य— स्त्री (मः) छन्दःसूत्रम्—६/४ ।

जयकीर्तेः — सेना, सुवस्तु, हृद्यम्, दृक् । [छन्दोऽनुशासने-२/१२–१५]

### ४-चतुरक्षरपादे षोडश छन्दांसि–१६

भरतस्य— पुष्पम्, भ्रमरी, जया, (नाट्यशास्त्रे-३२/५९–६२) ।

पिङ्गलस्य— सुमतिः (मगौ) छन्दःसूत्रे-६/५ ।

जनाश्रयस्य— कुसुमिता (मगौ) जानाश्रयी छन्दोविचितिः— ४/६

जयकीर्तेः — वृद्धिः, तारा, सुमुखी, बल्ली, सद्म, वर्त्म, कदली, त्रपु, जपा; जतु, दयि (छन्दोऽनुशासनम्— २/४७-३१)।

## ५- पञ्चाक्षरपादे ३२ छन्दांसि

भरतस्य— विद्युद्भ्रान्ता, भूतलतन्वी, कमलमुखी, वागुरु, शिखा, घनपंक्तिः; (नाट्यशास्त्रम्— ३२/६३-७४)

जयकीर्तेः — प्रीतिः रतिः, रमा, तिष्ठद्गुः (छन्चोऽनुशासनम्- २/३२-३६)

हेमचन्द्रस्य— नन्दा (तलगाः), सावित्री (मलगाः) छन्दोऽनुशासनम्-२/२८-३०

कविदर्पणकारस्य— जया (कविदर्पणः— ४/८)

प्राकृतपैङ्गलकारस्य — यमकम् (प्राकृतपैङ्गलम्—२/३६)।

दुःखभञ्जनस्य— नाली, कललि, शिला, कुम्भारिः, भ्रूः ह्रीः, पालि, किञ्जल्कि, वार्द्धि, विड्, पांशुः मालीनम्, वरीयम्, कल्कि, जतु, छिद्रम्, क्षुपः, क्षुत् (वाग्वल्लभः- ५/२-३१)।

## ६- षडक्षरपादे गायत्रीवृत्तौ ६४ छन्दांसि

भरतस्य— तनुमध्या, मकरशीर्षा, (१६/२-५, ३२/७६, ८०) मालिनी (रमौ) (१६/३), ३२/६८| मालिनी (भरौ), विमला, वीथी; गिरा, जला, रम्या, विक्रान्ता, नलिनी (३२/७८-९६)।

जयकीर्तेः — विद्युल्लेखा, कामलतिका, द्रुतम्, हंसमाला, (छन्दोऽनुशासनम्— २/४३-५१)।

केदारभट्टस्य— वसुमती (तसौ) वृतरत्नाकरः - ३/६, कुलकम् (रसौ) वृत्तरत्नाकरपाण्डुलिपिसंख्या—७२१ [३/६/८] १६

रत्नमञ्जूषाकारस्य— सूचीमुखी, शिखण्डिनी [रत्नमञ्जूषा—५/७, ८]

---

१६- इयं पाण्डुलिपिः पुण्यपत्तने भाण्डारकर शोधसंस्थानस्य पाण्डुलिपिपुस्तकालये सुरक्षिता वर्तते।

हेमचन्द्रस्य— तटी (मरौ), गुरुमध्या (सभौ), कच्छपी (रनौ) छन्दोऽनुशासनम्— २/३४-४४

प्राकृतपैङ्गलकारस्य — कामावतारः, सुमालती, दमनकः (२/५०-५६)।

दामोदरमिश्रस्य— मधुभारः (सजौ) वाणीभूषणम्—१/६९

दुःखभञ्जनस्य— वभ्रूः, कञ्जा, गुणवती, पिकाली, अरजस्का, कच्छपी, मृदुकीला, वलीमुखी, मशगा, कुह्री, सौरभि, सरि, साहूतिः, विन्दुः, मन्त्रिका, ढुण्ढि, क्षमापालि, राढि, अनिभृतम्, मङ्कुरः, वृत्तहारि, आर्भवम्, मधुमारकम्, हाटकशालि, पाकलि, पुटमर्दि, कंसरि, सोमश्रुति, सोपधि, इन्धा, सावटु, अयमितम्, प्रोथा, अर्ति, विससि, अतिकलि, सुदाय, अमतिः (वाग्वल्लभः — ६/५—६३)।

## ७- उष्णिग्वृत्तौ सप्ताक्षरपादे १२८ छन्दांसि

भरतस्य— द्रुतगतिश्चपला, विमला, कामिनी, भोगवती, मधुकरी, सुभद्राविलम्बिता, कुसुमवती, मुदिता, प्रकाशिता, पञ्चमगतिः, दीप्ता, (नाट्यशास्त्रम्-३२/१०१-१२१) उद्धता, भ्रमरमाला (१६/८, १०, ३२/१०७)।

पिङ्गलस्य— कुमारललिता (जसगाः) छन्दःशास्त्रम्—६/२

कालिदासस्य— मदलेखा (मसगाः) श्रुतबोधः — ९

जयकीर्तेः — सरलम्, चित्रम् मदलेखा (भसगाः), छन्दोऽनुशासनम्— २/५७, ५९, ६१

हेमचन्द्रस्य- गान्धर्वी (मौगः), हंसमाला (रौ गः) छन्दोऽनुशासनम्-२/५२,५८

जिनप्रभस्य— नन्दितकम् (सौ गः) अजितशान्तिस्तवटीकाऽन्तर्गतम्- २९, वेलणकरसम्पादितकविदर्पणस्य १११ तमे पृष्ठे प्रकाशितम्, योधपुरतः १९६२।

प्राकृतपैङ्गलकारस्य— सुवासः, करहञ्चः (प्राकृतपैङ्गलम्-८/६०; ६२)।
रामचन्द्रविबुधस्य— मधुमती (नभगाः) वृत्तरत्नाकरटीका– ३/१२/३
चन्द्रशेखरभट्टस्य— कुसुमततिः (नौ लः) वृत्तमौक्तिकम्– २/८२
समयसुन्दरस्य— चूडामणिः (तभगाः) वृत्तरत्नाकरटीका– ३/१३/१

**दुःखभञ्जनस्य वाग्वल्लभे ७/२-१२७ मध्ये १०२ छन्दांसि**

प्रहाणम्, सैरवी, शम्बूकः, निम्नाशया, सुमोहिता, अधीरा, ह्रोला, इभभ्रान्ता, अभीकः, अहिंसा, रसधारि, वेधा, पद्मा, किणपा, किर्मीरम्, वयस्कः, भीमार्जनम् ह्रोडपदा, दृतिः, ह्रिन्दीरः, ऊपिकः, मृष्टपादा, मायाविनी, राजराजी, कुठारिका, कल्पमुखी, परभृतम्, महोन्मुखी, महोद्धता, पूर्णि, बहिर्बलिः, पुरटिः, केशवती, सौरकान्ता, अधिकारी, महोधिका, नवसरा, चिररुचिः, बहुलया, यमनकः, स्विदा, नीहारी, कंसासारि, खर्विणी, गृहिणी, वर्द्धिष्णुः, श्रोणी, व्याहारि, किशलयः, देवलः, नर्द्दि, अनासादि, अलालापि, गुञ्जा, ऋचा, नन्दथुः, अनुः, अम्मेथी, मयूरी, सामिका, प्रोञ्छता, वृन्दा, प्रतर्दि, मीनपदी. मणिमुखी, मौलिस्रक्, परभानुः, मेथिका, गोध्रिः, सरलाङ्घ्रिः, विरोहि, वरजापि, सम्पाकः, पद्धरिः, गूर्णिका, काह्री, कामोद्धता, खर्परि, शन्तनुः, मुरजिका, कालम्बी, उपोहा, कापिका, मुहुरा, दोषा, उपोदरि, जासरि, भूरिमधु, भूरिवसुः, हर्षिणी, लोलतनुः. क्रोडान्तिकः, स्तरधिः, पौरसरि' वीरवटुः, अमतिः, अहतिः, वरशशिः, धनधरि, मुशकि, कुरदि, कोशि।

**८- अष्टाक्षरपादेऽनुष्टुब्वृत्तौ ९९ छन्दांसि**

भरतस्य— चित्तविलसितम् (नजौ गौ) नाट्यशास्त्रे गायकसंस्करणे–१५/१६,
सिंहलीला, मत्तचेष्टितम्, विद्युल्लेखा (नाट्यशास्त्रम्–३२/१२; १४, १६) विमलजला, ललितगतिः, मही, मधुकरसदृशा, नदी (नाट्यशास्त्रम्— ३२/१२८—१२९)।

पिङ्गलस्य— माणवकम्, चित्रपदा, समानी, हंसरुतम् (छन्दःसूत्रम्–६/४–७)।
जनाश्रयस्य— पद्मिनी (रौ गौ) जानाश्रयी छन्दोविचितिः — ४/२१
जयकीर्तेः — अनुष्टुप्, क्षमा, नाराचकम्, केतुमाला, सुमालती, (छन्दोऽनुशासनम्—२/६२—७२)
विरहाङ्कस्य— गाथा, हंसिनी, श्यामा, सुविकसितकुसुमम् (वृत्तजातिसमुच्चयः —४/५७, ७२, ५/१०, १४)।
केदारभट्टस्य— वितानम् (जतौ गौ) वृत्तरत्नाकरः — ३/१६
हेमचन्द्रस्य— विभा, गुणलयनी, मही (छन्दोऽनुशासनम — २/७२,८४,८५)।
गङ्गादासस्य— गजगतिः (नभलगाः) छन्दोमञ्जरी—२/८/६
रामचन्द्रविबुधस्य— नागरकम् (भरलगाः) वृत्तरत्नाकरटीका— ३/१६/२
चन्द्रशेखरभट्टस्य— जलदः (नो लौ) वृत्तमौक्तिकम्— २/१००
राधादामोदरस्य— सुचन्द्रप्रभा, सुविलासा (छन्दः कौस्तुभः – २/२७, २८)
अस्य पाण्डुलिपिसंख्या ८६४ पुण्यनगर भाण्डारकरशोधसंस्थाने पाण्डुलिपिपुस्तकालये सुरक्षिता वर्तते ।

## दुःखभञ्जनस्य वाग्वल्लभे ८/२–८६ मध्ये ६७ छन्दांसि

अनिर्भारः, इन्द्रफला, गोपावेदी, भूमिधारी, मौलिमालिका, युगधारि, विराजिकरा, वास्या, पाञ्चालाङ्घ्रिः, कुलाधारी, परिधारा, यशस्करी, कुररिका, मनोला, रमणीयशिखा, भार्ङ्गी, पारान्तचारी, कोचमारः, वान्तभारः, दिगीशः, सारानन्दा, कृष्णगतिका, प्रांतसीरा, अतिमोहा, चतुरीहा, वृत्तसुखी, सन्ध्या, विहावा, हेमरूपम्, शल्लकप्लुतम्, सरघा, माण्डवकम्, हाठिनी, श्रद्धरा, अरालिः, कुरुबरा, शिखिलाखता, ईडा, नागारि, लक्ष्मीः, नखपदा, हरित्, किष्कुः, नूतनर्म, अमरन्दि, कुलचार, करञ्जि, वृन्तम्, शाखोटकि, पञ्जरि, पीता, मन्थरि, वातुलि, भाषा, पाकलि, अमनाः, आकतनुः, आखेटः, अतिजनिः, सूतमधुः, मरु, चयनम्, कुशकः, निरुदम्, सिन्धुक्, क्षरम्, वेशि ।

## ९- बृहतीवृत्तौ नवाक्षरपादे ६८ छन्दांसि

भरतस्य— मधुकरिका (१६/१८) रुचिरा, कनकलता, शशिरेखा, शलभविचलिता, मणिगणनिकरः, सिंहाक्रान्ता, बुद्बुदः, भाविनी (नाट्यशास्त्रम्— ३२/१४२, २००—२१०, २८४, ३०४)।

पिङ्गलस्य— हलमुखी (रनसाः) छन्दःसूत्रम्— ६/१४, छन्दःशास्त्रम्–६/८

स्वयम्भुवः — बृहतिका (नो रौ) स्वयम्भूच्छन्दः — ६/८

जयकीर्तेः — बृहत्यम्, सुन्दरलेखा, अक्षि, चारुहासिनी, उदयः, उत्सुकः, भद्रिका, उपच्युतम्, गाथा (छन्दोऽनुशासनम्— २/७३–८३)।

हेमचन्द्रस्य— वक्त्रम्, तारः, सौम्या, सिंहाक्रान्ता (२/८८—१०५)।

कविदर्पणकारस्य— मकरलता (मनयाः) कविदर्पणः — ४/२१

प्राकृतपैङ्गलकारस्य— महालक्ष्मीः, सारङ्गिका, तोमरः (२/७६, ७८, ८६)।

रत्नशेखरस्य— बहुलम् (नत्रयम्) छन्दः कोशः — ८

गङ्गादासस्य — भुजङ्गसङ्गता (सजराः) छन्दोमञ्जरी— २/६/३

## दुःखभञ्जनस्य वाग्वल्लभे–९/२-५९ मध्ये ३८ छन्दांसि

मेघालोकः, मायासारी, खेलाढ्यम्, वैसारुः, निर्विन्ध्या, कर्मिष्ठा, धृतहाला, कलंहः, अयनपताका, सम्बुद्धिः, शम्बरधारी, सुगन्धिः, कामा, निभालिता, रवोन्मुखी, अवनिजा, प्रवह्लिका, मधुमल्ली, सहेलिका, करशया, शशिकरी, निषधः, रञ्जकः, अनवीरा, प्रियतिलका, आकेकरः, धौमिकः, वलगा, कीटमसृणकः, लीला, वारिधियानम्, कुहूः, कठिनास्थि, वन्दारुः, विकचवती, उदधिः' स्फुटघटिता।

## १०- पंक्तिवृत्तौ दशाक्षरपादे १०६ छन्दांसि

भरतस्य– कुवलयमाला, शिखिसारिणी (१६/२०, २२) प्रमिता (३२/१४४) वृत्तसमृद्धा, सुरदयिता, कुसुमसमुदिता, वृत्तम् (प्रथिता), उद्धता, विपुलभुजा, पुष्पसमृद्धा (३२/२०४, २१३—२२७)।

पिङ्गलस्य—शुद्धविराट्, मत्ता, उपस्थिता (छन्दः सूत्रम्- ६/१५, १६, २०)
छन्दः शास्त्रम्— ६/६, १३, १४)।

कालिदासस्य— हंसी (मभनगाः) श्रुतबोधः — १६

स्वयम्भुवः — पंक्तिका (रयजगाः) स्वम्भूच्छन्दः — ६/११

जयकीर्तेः — मदिराक्षी, मणिरङ्गः, बन्धूकम्, त्वरिततगतिः, हंसक्रीडा, (छन्दोऽनुशासनम्— २/८८-९०-९१-९४-९५)।

उत्पलभट्टस्य— वितानम् (ससगगाः) बृहत्संहितावृत्तिः — १०३/४६

केदारभट्टस्य— मनोरमा (वृत्तरत्नाकरः — ३/२७)। दीपकमाला (वृत्तरत्नाकरपाण्डुलिपिसंख्या- ७२१-/३/२८)।

हेमचन्द्रस्य— पणवः, निलया, उषिता, बन्धूकम् (भनमगाः), कलिका (छन्दोऽनुशासनम् — २/११०-११५-११६-११८-१२१)।

प्राकृतपैङ्गलकारस्य— संयुता, सुषमा (प्राकृतपैङ्गलम्–२/९०, ९६)

चन्द्रशेखरस्य— गोपालः, ललितगतिः (वृत्तमौक्तिकम्— २/१२५, १४५)।

भास्करस्य— दीपकमाला, पणवः [वृत्तरत्नाकरसेतुः - ३/२८/२, ५]

## दुःखभञ्जनस्य वाग्वल्लभे-१०/२-९३ मध्ये ७२ छन्दांसि

शेफाली, धूम्राली, नीरोहा, वीरान्ता, निर्मेधा, मध्याधारः, वशारोपी, कूलम्, बोधातुरा, सुराक्षी, कलापान्तरिता, भारवहा, विशदच्छायः, ऐन्द्री, हेमहासः, सुलेखा, नमेरुः, गणदेहा, नरगा, बलधारी, अचलपङ्क्तिः, असितधारा, उन्नालम्, निरन्तिकम्, उपधाय्या, तनिमा, विशालान्तिकम्, विशालप्रभम्, चन्पदम्, उपसंकुला, वर्हातुरा, नीराञ्जलिः, सराविका, अक्षरावली, सहजा, अहिला, कुप्यम्, अनुचायिका, वर्मिता, भिन्नपदम्, वडिशभेदिनी, चितिभृतम्, फलिनी, सुरयानवती, विरलम्, छलितकम्, प्रवादपरा, वारवती, परिचारवती, काण्डमुखी, शरत्, गहना, फलधरः, धमनिका, कृतमणिता, महिमावसायि, कामचारि, नेमधारि, हीरलम्बि, वनिताविनोदि, विरेकि, कुकपादि, लुलितम् रसभूमम्, चारुचरणम्, सरसमुखी, ऋतम्,

कीलाल:, खोरलि, कामनिभा, विस्रांसि, नीरनिधि: ।

## ११-एकादशाक्षरपादे त्रिष्टुब्वृत्तौ १२५ छन्दांसि

भरतस्य— दोधकम्, मोटकम्, इन्द्रवज्रा, रथोद्धता, स्वागता, शालिनी, गतविशोका, विश्लोक:, पीनश्रोणि:, अभिहिता, कमललताक्षी; द्रुतपादगति:, विमला, रुचिरा, अपरवक्त्रम् (नाट्यशास्त्रम्— १६/२४—३६, ३२/१४६—१४६, २०२—३०८) ।

पिङ्गलस्य— वातोर्मि:, भ्रमरविलसितम्, वृन्ता, श्येनी, विलासिनी, (छन्द:सूत्रम्- ६/२६-३२ छन्द:शास्त्रम्-२०-२६) ।

जनाश्रयस्य— सङ्गता (जसयलगा:) जानाश्रयी छन्दोविचिति: — ४/४६

जयदेवस्य— उपस्थितम् (जसता गौ) जयदेवच्छन्द:- ६/४१

स्वयम्भुव: — एकरूपम् (मसजा गौ) स्वयम्भूच्छन्द: — ६/२४

जयकीर्ते: — उपस्थिता:, अपरान्तिका, लयग्राहि, अच्युत:, पतिता— श्री, (छन्दोऽनुशासनम्— २/१०३—१०५-१०७-१०८-११४)

विरहाङ्कस्य— विभूषणा (नररलगा:) वृत्तजातिसमुच्चय:— ४/६४

केदारभट्टस्य— शिखण्डी [वृत्तरत्नाकरपाण्डुलिपिसख्या—६६०/३/४३/२]

हेमचन्द्रस्य— प्रत्यवबोध:, रोचक:, विदुषी, वातोर्मि:, सारणी, (छन्दोऽनुशासनम्-२/१२३-१२७-१३१-१३७-१५३) ।

सुल्हणस्य— सान्द्रपदम् [वृत्तरत्नाकर— सुकविहृदयानन्दिनी—३/४३/६]

प्राकृतपैङ्गलकारस्य— दमनक:, मालती (प्राकृतपैङ्गलम् -२/१०८, ११२) ।

दामोदरमिश्रस्य— दमनक: (ननलगा:) वाणीभूषणम् -२/१११

चन्द्रशेखरभट्टस्य— सेनिका, बकुलम् (वृत्तमौक्तिकम्-२/१६३, १८८]

समयसुन्दरस्य— असुविलास: [वृत्तरत्नाकर-सुगमावृत्ति:— ३/४३/५]

नारायणस्य— कुपुरुषजनिता (ननरा गौ) वृत्तरत्नाकरनारायणी- ३/४३/८

## दु:खभञ्जनस्य वाग्वल्लभे-११/२-१११ मध्ये ८२ छन्दांसि

आराधिनी, अमालीनम्, मेघध्वनिपूर:, उद्धतकरी, अपयोधा, अन्तर्वनिता,

प्रफुल्लकदली, लक्षणलीला, कूलचारिणी, विलुलितमञ्जरी, भूरिघटकः; कलितकमलमाला, वल्लवीविलासः, विकसितपद्मावली, अमोघमालिका, ललितागमनम्, संसृतशोभासारः, ललितालवालः, वार्ताहारी, कडारः, उदितदिनेशः, जालपादः, दारुदेहा, सुधाधारा, कन्दविनोदः, विलम्बितमध्या, विष्टम्भः, क्रोशितकुशला, उपहितचण्डी, श्रितकमला, विहारिणी, ईहामृगी, परिमलललितम्, विमला, सरोजवनिका, अमन्दपादः, पञ्चशाखी, पटुघट्टिका, वर्णबलाका, श्रमितशिखण्डी, रोधकः, मदनमाला, उदितविजोहा, मात्रा, सुवृत्तिः, भुजङ्गी, जवनशालिनी, प्रसृमरकरा, गल्लकः, प्रपातावतारः, गह्वरः, वारयात्रिकम्, प्रतारिता, सौरभवर्द्धिनी, भुजगहारिणी, सम्मदमालिका, कनककामिनी, उपदारिका, दारिका, मालविका, नाभसः, सौभगकला, वीवधः, आशापादः, भुजलता, हरिकान्ता, कलस्वनहंसः, मदनया, खटका, शल्कशकलम्, कुशलकलावतिका, अर्थशिला, निरवधिगतिः, दामघटिता, सामपदा, गम्भारिः, कामुकलेखा, संश्रयश्रीः, पिचुलः, कालवर्म, शेषापीडः, केलिचरः ।

## १२- द्वादशाक्षरपादे जगतीवृत्तौ १४५ छन्दांसि

भरतस्य— तोटकम्, कुमुदनिभा, चन्द्रलेखा, प्रमिताक्षरा, वंशस्थम्, हरिणप्लुतम्, काममत्ता, अप्रमेया, पद्मिनी, पुटः (१६/३८—५६) गतविशोका, ललिता, विक्रान्ता, कमललोचना, हंसास्यम् (नाट्यशास्त्रम्—३२/१४६–१६२, २२५, ३१७–३२३) ।

पिङ्गलस्य— इन्द्रवंशा, जलोद्धतगतिः, ततम्, कुसुमविचित्रा, चञ्चलाक्षी–गौरी, कान्तोत्पीडा, वाहिनी, नवमालिनी, वरतनुः, जलधरमाला, ललना, [छन्दः शास्त्रम्—६/२६—४३, छन्दः सूत्रम्—६/३५—३६–४२, ४६, ४८, ४९, ८/३—६] ।

जयदेवस्य— चन्द्रवर्त्म, पुष्पविचित्रा, चलनेत्रिका [जयदेवच्छन्दः—६/४३–४५—४६] ।

जयकीर्तेः — कामावतारः, मौक्तिकदाम, कलहंसा, मत्तकोकिला, ललितपदा (१७) पुण्डरीकः, शिविका—महेन्द्रवज्रा, द्रुतपदा, श्रुतिः स्मृतिः [छन्दोऽनुशासनम्—२/११६–१४७]।

रत्नमञ्जूषाकारस्य— समानम्, प्रयाणम् [रत्नमञ्जूषा–५/१–२]।

हेमचन्द्रस्य— कल्याणम्, कमुदिनी, मेघावली, ह्रीः, कोलः [छन्दोऽनुशासनम्– २/१७३, १८५, १८८, १९२, १९३]।

कविदर्पणकारस्य— पञ्चचामरः (जभजराः) कविशर्पणः — ४/४८

प्राकृतपैङ्गलकारस्य— मोदकः, तरलनयना [प्राकृतपैङ्गलम्—२/१३५, १३७]

भास्करस्य— द्रुतपदम्, ललना [वृत्तरत्नाकरसेतुः — ३/६४/११,१२]

## दुःखभञ्जनस्य वाग्वल्लभे–१२/२–१२७ मध्ये ९४ छन्दांसि

भासितभरणम्, विषमव्याली, शम्पा, मिथुनमाली, किंशुकास्तरणम्, दोर्लीला, त्रिशालाम्भोजाली, वीणादण्डः, मत्ताली, वसनविशाला, लीलारत्नम्, विवरविलसितम्, साक्षी, स्वरवर्षिणी, धवलकरी, लुम्बाक्षी, मलयजसुरभिः, आधिदैवी समयप्रहिता, मिहिरा, कलवल्लीविहङ्गः, असुधारा, वलोर्जिता, वधिरा वलभी, लीढालर्कः, वनिताविलोकः, कमुदिनीविकासः. वसन्तहासः, विद्रुमदोला, सुखशैलः, करमाला, विजयपरिचया. कासारक्रान्ता, माया, परिलेखः, वरत्रा. कुम्भोध्नी, शरमेया, नीरान्तिकम्, धृष्टपदम्, अर्दितपादः, परितोषा, छलितकपदम्, उपधानम्, पथिकान्ता, विरतिमहती, गलितनाला, सरोजावली विप्लुतशिखा, विशिखलता, अर्पितमदना, सुनन्नम्, अन्तर्विकासवासकः, परिपुंखिता, प्रसृमरमरालिका, विधारिता, पिकालिका, विरला, अविरलरतिका, राधिका विपुलपालिका, उपलेखा, भसलविनोदिता, विरतप्रभा, मुकुलितकलिकावली, अतिवासिता, भुजङ्गजुषी, अर्जितफलिका, कुरङ्गावतारः, विक-

---

(१७) जयकीर्तिना वृत्तमिदं भरतस्य स्वीकृतम्, यथा– "ललितपदा भरतस्य नजौ ज्यौ।" छन्दोऽनुशासनम्—२/१३५

स्थनम्, नीलगिरिका, वनिताभरणम्, सुभद्रावतरणिः, विरलोद्धता, सुविहिता, उदर्करचिता, सुवनमालिका, नगमहिता, सम्मदवदना, कुमारगतिः, उदयनमुखी, रसिकपरिचिता, व्यायोगवती, वियोगवती, सङ्गमवती, ज्वलिता, रूपावलिः, अनीचकः, भासितसरणिः, विकलवकुलवल्ली, निमग्नकीला, वासरमणिका, अरिला ।

## १३- अतिजगतीवृत्तौ त्रयोदशाक्षरपादे ११६ छन्दांसि

भरतस्य— प्रभावती, प्रहर्षिणी, मत्तमयूरः, त्वरितमतिः, मदकलिता, कमललोचना, विलम्बिता, विद्युन्माला, बुद्बुदकः [नाट्य शास्त्रम्-१६/५८-६२, ३२/१५१, १६४, २३७-२४१, ३१०]।

पिङ्गलस्य— गौरी (ननसगाः) कुटिलगतिः [छन्दः सूत्रम्-७/४, ८/८]।

कालिदासस्य— प्रभावती (तभसजगाः) श्रुतबोधः — ३५

जनाश्रयस्य— भद्रा [जानाश्रयी छन्दोविचितिः — ४/६६]।

जयकीर्तेः — कौमुदी, कुटजः - भ्रमरी, चन्द्रिका (यमररगाः) मञ्जुभाषिणी (नजसजगाः), मणिकुण्डलम् सुवक्त्रा-अचल, अङ्गरुचिः [छन्दोऽनुशासनम्—२/१४६—१६१]।

केदारभट्टस्य— चन्द्रिका, प्रभावती, गौरी (ननसरगाः), वृत्तरत्नाकरः — ३/७०, ३/७०/३, ३/७०/८

हेमचन्द्रस्य— क्षमा, श्रेयोमाला, क्षमा, चन्द्रिका (ननरयगाः), मञ्जुभाषिणी (जतसजगाः), चन्द्रलेखा, लयः, विद्युन्मालिका, गौरी (ननतसगाः), अभ्रकम्, कोडुम्भः [छन्दोऽनुशासनम्- २/२००—२१६]।

सुल्हणस्य— उपस्थितम् [वृत्तरत्नाकर-सुकविहृदयानन्दिनी—३/७०/२]

प्राकृतपैङ्गलकारस्य— तारकम्, कन्दः, पङ्क्तावली, [प्राकृतपैङ्गलम्—२/१४३, १४५, १४८]।

चन्द्रशेखरभट्टस्य— वाराहः, चन्द्रिका, विमलगतिः, (वृत्तमौक्तिकम्—२/२५५, २७७, २९३)।

समयसुन्दरस्य— कुटिगगतिः (वृत्तरत्नाकरसुगमावृत्तिः—३/७०/६)।

## दुःखभञ्जनस्य वाग्वल्लभे १३/२-९५ मध्ये ७४ छन्दांसि

उत्काभासः, लीलालोकः, कलाधाम, वासविलासवती, विपन्नकदनम्, बिभा; रसधारा, दर्पमाला, भाजनशीला, श्रद्धरान्ता, आनता, प्रमोदः, सुकर्णपूरः; जगत्समानिका, अतिरंहः, माणविकाविकासः, कीरलेखा, आननमूलम्, लोध्रशिखा, शलभलोला, पङ्कजधारिणी, कुबेरकटिका, मयूखसरणिः, रुचिवर्णा, विधुरवितानम्, पारावतः, प्रवाह्लिका, स्विन्नशरीरम्, वामवदना, भसलपदम्, कठिनी, वृद्धवामा, मर्मस्फुरः, पृषद्वती, अखण्डमण्डनम्, कलापतिप्रभा, अशोकपुष्पकम्, करपल्लवोद्‌गता, सार्द्धरदा, मञ्जुमालती, विरोधिनी; चन्द्रहासकरः, द्रुतलम्बिनी, कनककेतकी, गरुदवारिता, अमितनगानिका, आपणिका, गुणसारिका, सारसनावलिः, उपचितरतिका, उदात्तहासः, कलनायिका, अभ्रभ्रमशीला, विदला, प्रयातलिका, कर्मठः, लवलीलता, अनिलोद्धतमुखी, प्रबोधफलिता, कोमलकल्पकलिका, परगतिः, अभिरामा, उपसरसी, मदनजवनिका, परिवशिता, अर्धकुसमिता, विनताक्षी, नरावलिः, उभीरुका, कनकिता, सुखकारिका, अट्टासिनी, पङ्क्तावलिः (भनयनलाः), अशनिः।

दत्तदीनेशचन्द्रस्य— सौदामिनी (छन्दः सन्दोहः — ३३०)।

## १४-शक्वरीवृत्तौ चतुर्दशाक्षरपादे ९९ छन्दांसि

सैतवस्य— उद्धर्षिणी (वसन्ततिलका) छन्दःसूत्रम् — ७/१०

भरतस्य— असम्बाधा, शरभललितम् (१६/६६, ६८) भूतलतन्वी, विनम्रा (नाट्यशास्त्रम् — ३२/१६६, १६८)।

पिङ्गलस्य— अपराजिता, प्रहरणकलिता, वरसुन्दरी, कुटिला (छन्दःसूत्रम्-७/६, ७, ८/९, १०)।

स्वयम्भुवः— नान्दीमुखी, करिमकरभुजा, उपचित्रम्, लक्ष्मीः (मरौ तौ गौ) ज्योत्स्ना, जया (स्वयम्भूच्छन्दः — १/५, ८—१२)।

जयकीर्तेः — चन्द्रशाला, लक्ष्मीः (भसौ तौ गौ), प्रथिता, सुदर्दना, मणिक-

टिकम्, दर्दुरकः, वनलता, सुनन्दा, (छन्दोऽनुशासनम्— २/१६६, १६८, १७१, १७४, १७५, १७८, १८०, १८१)।

विरहाङ्कस्य— तरङ्गकः (वृत्तजातिसमुच्चयः — ४/२२)।

केदारभट्टस्य— अलोला (वृत्तरत्नाकरः — ३/७७) कुटिलः (वृत्तरत्नाकर' पाण्डुलिपिसंख्या—१२०/३/७७/१२ (इयं पाण्डुलिपिः रायल एशियाटिक सोसायटी बम्बई-पुस्तकालये वर्तते)।

रत्नमञ्जूषाकारस्य— राजरमणीयम् (रत्नमञ्जूषा— ६/२१)।

हेमचन्द्रस्य— सिंहः, सुकेशरः, इन्दुवदना, शरभललितम् (छन्दोऽनुशासनम्— २/२२८, २३३, २३८, २३९)।

प्राकृतपैङ्गलकारस्य— चक्रपदम् (प्राकृतपैङ्गलम्— २/१५२)।

गङ्गादासस्य— वासन्ती (छन्दोमञ्जरी— २/१४)।

चन्द्रशेखरभट्टस्य— सिंहास्यम्, आहधृतिः, मल्लिका, मणिगण (वृत्तमौक्तिकम्–२/२९५, ३२२, ३२६, ३२८)।

नारायणभट्टस्य— नदी, कुमारी, लक्ष्मीः (मसतभा गौ) वृत्तरत्नाकरनारायणी— ३/७७/२, ३, ६)

जनार्दनस्य— कुटिलः, चन्दोरसः (वृत्तरत्नाकरभावार्थदीपिका— ३/७७/१, ८)। अस्याष्टीकायाः पाण्डुलिपिसंख्या- ४८६ पुण्यनगरे भाण्डारकरशोधसंस्थानस्य पुस्तकालये वर्तते।

## दुःखभञ्जनस्य वाग्वल्लभे–१४/२–७६ मध्ये ५७ छन्दांसि

वंशोत्तंसा, कालध्वानम्, पारावारः, प्रपन्नपानीयम, अनिन्दगुर्विन्दुः, धीरध्वानम्, ललितपताका, सम्बोधा, विन्ध्यारूढः, दृप्तदेहा, बभ्रुलक्ष्मीः, सरमासरणिः, निर्यत्पारावारः, कल्पकान्ता, परीवाहः, वाटिकाविकासः, अर्कशेषा, मदावदाता, चेलाञ्चलः, कुसुम्भिनी, विलम्बनीया, अनन्तदामा, कृतमालः, शारदाचन्द्रः, परिणाही, रतिरेखा, मन्मथः, प्रतिभादर्शनम्, प्रपातः, जलदरसिता, कल्पमीलिता, सुधाधरा, कलाधरः,

कुडङ्गिका, वितानिता, अलकालिका, गगनोद्गता, विनन्दिनी, भूरिशिखा; क्रीडावसथः, नासाभरणम्, कर्णिशरः, विपाकवती, काकिणिका, कारविणी, कूर्चललितम्, कलहेतिका, अञ्चलवती, गगनगतिका, निर्मुक्तमाला; कामशाला, उन्नर्म, उपकारिका, हेममिह्लिका, हेति, मधुपालि, वेशम्भरि।।

## १५-अतिशक्वरीवृत्तौ पञ्चदशाक्षरपादे ५७ छन्दांसि

भरतस्य— नान्दीमुखी, भूतलतन्वी, [नाट्यशास्त्रम्–१६/७०, ३२/१७०]।

पिङ्गलस्य— चन्द्रावर्ता [छन्दःशास्त्रम्—७/११, छन्दःसूत्रम्—७/१२]।

स्वयम्भुवः — उपमालिनी, चन्द्रोद्योतः, तूणकः–तोणकः, चित्रा, [स्वयम्भूच्छन्दः — १/१४–१५–१६, १६]।

जयकीर्तेः— ऋषभः, ज्योतिः–मित्रम्, सुकेसरः, अरविन्दकः– कलभाषिणी, मयूरललितम, चन्द्रलेखा, रमणीयकम्, एला [२/१८२–१६७]

विरहाङ्कस्य— श्रीः– भ्रमरावलिः, सङ्गतकः [३/२१–४/६१, ४/६४]

केदारभट्टस्य— चन्द्रलेखा (मरमा यौ) वृत्तरत्नाकरः – ३/८४, चन्द्रलेखा (पञ्च रगणाः) वृत्तरत्नाकरपाण्डुलिपिसख्या–७२१–३/८४/७

हेमचन्द्रस्य— चन्द्रलेखा (रौ मो यौ), गौः, भोगिनी, शिशुः,केतनम्, मृदङ्गः, (छन्दोऽनुशासनम्—२/२५१, २५७—२६१)।

प्राकृतपैङ्गलकारस्य– निशिपालः, मनोहंसः (प्राकृतपैङ्गलम् २/१६०, १६२)

गङ्गादासस्य — विपिनतिलकम् (नसना रौ) छन्दामञ्जरी— २/१५/६

चन्द्रशेखरभट्टस्य— उडुगणः (पञ्च नगणाः) वृत्तमौक्तिकम्—२/३७१

राधादामोदरस्य— चन्द्रकान्ता (रौ तो यौ) छन्दः कौस्तुभः — २/१२०

## दुःखभञ्जनस्य वाग्वल्लभे १५/२–४१ मध्ये २७ छन्दांसि

वज्रालो, स्फोटक्रीडः, क्रीडितकटका, चार्वटकः, आनद्धः, बहुलाभ्रम्, वाणीभूषा, सिंहपुच्छम्, कुमारलीला, दीपकः, परिमलः, शरकल्पा, मदनमालिका, प्लवङ्गम, मयूरवदना, सारिणी, चमरीचरः, जननिधिवेला, लीलाचन्द्रः,

धोरितम्, शान्तसुरभिः, कर्णलता, विशकलिता, शीर्षविरहिता, शङ्कावली, ऊहिनी, मितसक्थि ।

## १६–अष्टिवृत्तौ षोडशाक्षरपादे ५२ छन्दांसि

भरतस्य— स्खलितविक्रमा, वृषभगजविलसितम्, प्रवरललितम्, उद्गता
(नाट्यशास्त्रम्- १६/३२, ३२/१७२, १६/७२, ७४, ३२/३१२
पिङ्गलस्य— गीत्यार्या, शैलशिखा, वर युवतिः [छन्दः-४/४६, ८/११,- १२
जनाश्रयस्य— ललना, चन्द्रलेखा [जानाश्रयी छन्दोविचितिः -४/८२,–८३]
स्वयम्भुवः— पञ्चचामरः, चित्रशोभा, चित्रम्, मदनललिता [१/२०–२४]
जयकीर्तेः — स्मरशरमाला, पद्ममुखी, मञ्जुलभञ्जना, कमलदलम्, वाणिनी,
कान्तः, इन्दुमुखी–चिन्तामणिः २/१९८–२०१, २०४,–२०७]
विरहाङ्कस्य— प्रमुदिता (भरौ नरौ नगौ) वृत्तजाति समुच्चयः— ५/३३
रत्नमञ्जूषाकारस्य— वेल्लिता, कोमललता [रत्नमञ्जूषा–६/३०, ३२]।
हेमचन्द्रस्य— कामुकी (ममममगाः) कामुकी (ससससयाः), चलधृतिः,
सुरतलालिता [छन्दोऽनुशासनम्-२/२६६, २६७, २६८, २८०]।
गङ्गादासस्य— चकिता (भससतनगाः) छन्दोमञ्जरी—२/१६/३
चन्द्रशेखरभट्टस्य— सुकेसरः, ललना [वृत्तमौक्तिकम्—२/३९९,४०१]।

## दुःखभञ्जनस्य वाग्वल्लभे १६/२–३४ मध्ये २२ छन्दांसि

माल्योपस्थः, कल्पाहारी, प्रतीपवल्ली, वक्रावलोकः, आरभटी, अभिधात्री, अनिलोहा, भोगावलिः, बलिवदनम्, सूतशिखा, परिखायतनम्, मालावलयः, भीमावर्तः, शिशुभरणम्, तरवारिका, कमलकरः, कलहकरः, नरशिखी, सारवरोहा, दन्तालिका, कल्पधारि, कुल्यावर्तः।

## १७-अत्यष्टिवृत्तौ सप्तदशाक्षरपादे ४१ छन्दांसि

भरतस्य— शिखरिणी, वृषभललितम्, श्रीधरा, वंशदलम् – वंशपत्रपतितम्
(मन्दाक्रान्ता), विलम्बितगतिः, रुचिरमुखी [नाट्यशास्त्रम्—

१६/७६, ७८, ८०, ८२ (३२/३१५), १६/८४, ३२/१७५]।
पिङ्गलस्य— अतिशायिनी, अवितथम् [छन्दःसूत्रम्—८/१३, १४]।
स्वयम्भुवः — हारिणी (मभनमयलगाः) पद्मम्, रोहिणी, भावाक्रान्ता [स्वयम्भूछन्दः— १/२९, ३२, ३३, ३५]।
जयकीर्तेः — वसुधारा (पञ्च नगणा गुरुद्वयम्) छन्दोऽनुशासनम्–२/२१६
उत्पलभट्टस्य— विनाशिनी (नजभजभलगाः) बृहत्संहितावृत्तिः१०३/३५
हेमचन्द्रस्य – वाणिनी (नजौ भजौ जो गुरू) छन्दोऽनुशासनम्—२/२९९
प्राकृतपैङ्गलकारस्य— मालाधरः (नसजसयलगाः) प्राकृतपैङ्गलम्–२/१७८
चन्द्रशेखरभट्टस्य— लीलाधृष्टम् (पञ्च मगणा गुरू), मतङ्गवाहिनी (रजौ रजौ रलगाः), दशमुखहरः वृत्तमौक्ति–२/४०५, ४३५, ४३९
नारायणभट्टस्य -- हरिः, कान्ता [वृत्तरत्नाकरनारायणी—३/९३/२, ४]।

## दुःखभञ्जनस्य वाग्वल्लभे १७/२–३० मध्ये २० छन्दांसि

वीरविश्रामः, वल्वजः, क्रूरासनम्, कामरूपम् शायिनी, सुलेखा, तितिक्षा, हारिणी (मभनययलगाः), बालविक्रीडितम्, कालसारोद्धतम्, विरुदरुतम्, कासारः, वंशलः, विधुरविरहिता, शिशुवनिता, वाहान्तरितम् कर्णस्फोटः, प्रतीहारः, कान्तारः, फल्गु।

## १८-अष्टादशाक्षरपादे धृतिवृत्तौ ४९ छन्दांसि

भरतस्य— चित्रलेखा (मतौ नयौ यौ) नाट्यशास्त्रम् - १६/८६
पिङ्गलस्य— विबुधप्रिया, नाराचकम् [छन्द.सूत्रम्— ८/१६, १७]।
स्वयम्भुवः — चित्रलेखा (मभौ नयौ यौ), चन्द्रमाला, भ्रमरपदम्, शार्दुलललितम्, कुरङ्गिका, ललितम्, हरिणीपदम्, चलम्, केसरः; अनङ्गलेखा [स्वयम्भूच्छन्दः — १/३६—४६]।
जयकीर्तेः — मुक्तामाला, मन्दारमाला, मणिमाला, पङ्कजमुक्ता, सुरभिः [छन्दोऽनुशासनम्–२/२१८, २२१–२२२, २२३, २२५]।

केदारभट्टस्य— वरकृत्तनम् [वृत्तरत्नाकर-पाण्डुलिपिसंख्या ११९—३/९४/१५] पाण्डुलिपिरियं रायल एषियाटिक सोसायटी बम्बई-पुस्तकालये वर्तते ।
रत्नमञ्जूषाकारस्य— वाचालकाञ्ची (मरभयररा:) रत्नमञ्जूषा—७/३
हेमचन्द्रस्य— भङ्गि. बुद्बुद: [छन्दोऽनुशासनम्—२/३१९,३२०] ।
सुल्हणस्य– लता, सिंहविस्फूर्जितम् [वृत्तरत्नाकर-टीकासुकविहृदयानन्दिनी–३/९४/१, ११] ।
प्राकृतपैङ्गलकारस्य– मञ्जीर:, क्रीडाचक्रम् [प्राकृतपैङ्गलम्·२/१८०, १८२]
गङ्गादासस्य— नन्दनम् (नजौ भजौ रौ) छन्दोमञ्जरी—२/१८
चन्द्रशेखरभट्टस्य— लीलाचन्द्र:, उपवनकुसुमम्— २/४४१, ४७१] ।
भास्करस्य— अश्वगति:, हरिणप्लुतम् [वृत्तरत्नाकरसेतु:–३/९४/५, १०] ।
नारायणभट्टस्य— चित्रलेखा (मनौ नतौ तभौ), शार्दूल: [वृत्तरत्नाकर-नारायणी—३/९४/७, ११] ।

## दुःखभञ्जनस्य वाग्वल्लभे १८/२–२५ मध्ये १६ छन्दांसि

परामोद:, विलुलितवनमाला, नीलशार्दूल:, सत्केतु:, सिन्धुसौवीर: पर्विणो, क्रोडक्रीड:, वसुपरमञ्जरी, हरिणप्लुतम् (मसजभरसा:), षट्पदेरितम्, पार्थिव:, परिपोषक:, अभ्रान्तरालापि, पतङ्गपाद:, हीरकहारधर:, दण्डी ।

## १९-ऊनविंशत्यक्षरपादेऽतिधृतिवृत्तौ ३९ छन्दांसि

भरतस्य— शार्दूलविक्रीडितम्, करकलता [नाट्य १६/८८, ३२/१७७]
पिङ्गलस्य— विस्मिता (यमौ नसौ रौ ग:) छन्द: सूत्रम् — ८/१८
जनाश्रयस्य— वायुवेगा (मसजसननगा:) छन्दोविचिति: – ४/९४
स्वयम्भुव: — पुष्पदाम, चन्द्रविम्बम्, छाया, मकरन्दिका [१/४८-५२]
जयकीर्ते: — तरलम्, शार्ङ्गि, रतिलीला [२/२२६, २२९, २३०] ।
केदारभट्टस्य— रचना (नजभयभजगा:) वृत्तरत्नाकर-पाण्डुलिपि: (दा)—३/९६/३

रत्नमञ्जूषाकारस्य— वायुवेगा (मसजसनजगाः), माधवीलता [७/६, ७]

हेमचन्द्रस्य— मुग्धकः, तरुणीवदनेन्दुः [छन्दोऽनुशासनम्- २/३२६, ३३३]।

सुल्हणस्य— रचना (नजभयसजगाः) वल्लकी [वृत्तरत्नकर-सुकविहृदयानन्दिनी-३/६६/२, १०]।

प्राकृतपैङ्गलकारस्य— चन्द्रमाला, धवलम्, शम्भुः [२/१६०, १६२, १६४]

गङ्गादासस्य— सुरसा (मरभनयनगाः) छन्दोमञ्जरी— २/१६/४

चन्द्रशेखरभट्टस्य— नागानन्दः, मृदुलकुसुमम् [वृत्तमौक्तिकम्- २/४७३, ४६७]

नारायणभट्टस्य— समुद्रतता, पञ्चचामरः, मणिमञ्जरी, छाया [वृत्तरत्नाकर-नारायणी–३/६६/१, ४, ७, ८]।

**दुःखभञ्जनस्य वाग्वल्लभे १६/२-१८ मध्ये ११ छन्दांसि**

झिल्लीलीला, विधुनिधुवनम्, माराभिसरणम्, लोललोलस्वलीलम्, किरणकीर्तिः, शिलीमुखोज्जृम्भितम्, कलापदीपकः, कल्पलतापताकिनी, निर्गलितमेखला, ग्रावास्तरणम्, टङ्कणम्।

## २०–कृतिवृत्तौ विंशत्यक्षरपादे २५ छन्दांसि

भरतस्य— सुवदना (मरभनयभलगा) नाट्यशास्त्रम्–१६/६१–६२

पिङ्गलस्य— वृत्तम् (रजरजरजगलाः) छन्दःसूत्रम्— ७/२५

स्वयम्भुवः — शोभा, चित्रमाला [स्वयम्भूच्छन्दः — १/५३, ५४]।

जयकीर्तेः— मत्तेभविक्रीडितम् कामलता, भासुरः, मुद्रा (उज्ज्वलम्), पुटभेदः [छन्दोऽनुशासनम्- २/२३३, २३४, २३५, २३६, २३७]।

विरहाङ्कस्य— शशाङ्करचितम् [वृत्तजातिसमुच्चयः — ५/४४]।

रत्नमञ्जूषाकारस्य— दीपकशिखा [रत्नमञ्जूषा— ७/८]।

हेमचन्द्रस्य— सद्रत्नमाला (मनसनमयलगाः) छन्दोऽनुशासनम्- २/३४०

प्राकृतपैङ्गलकारस्य— गीता (सजजभरसलगाः) प्राकृत पैङ्गलम् —२/१९६

रत्नशेखरस्य— नाराचपञ्चचामरः (जरजरजरलगाः) छन्दः कोशः– १५

चन्द्रशेखरभट्टस्य- योगानन्दः, अनवधिगुणगणः [वृत्तमौक्ति०- २/४९९, ५१८]

## दुःखभञ्जनस्य वाग्वल्लभे २०/१-१४ मध्ये ९ छन्दांसि

वाणीवाणः, भेकालोकः, विष्वग्वितानम्, भूरिशोभा, संलक्ष्यलीला, हाराव-तारः, वीरविमानम्, अबन्ध्योपचारः, सौरभशोभासारः ।

## २१-एकविंशत्यक्षरपादे प्रकृतिवृत्तौ २६ छन्दांसि

भरतस्य— स्रग्धरा, श्रेणिः, चपला [नाट्य० १६/९४, ३२/२९२, २९८]
पिङ्गलस्य— शशिवदना (नजभजजजराः) छन्दः सूत्रम्- ८/१९
जयकीर्तेः— वनमञ्जरी, ललितगतिः, तरङ्गमालिका, पद्म० [२/२४०-२४३]
रत्नमञ्जूषाकारस्य— कथागतिः, ललितविक्रमः [मञ्जूषा—७/१३, १४]
हेमचन्द्रस्य — मत्तक्रीडा (ममतनननसाः) छन्दोऽनुशासनम्- २/३४८
प्राकृतपैङ्गलकारस्य— नरेन्द्रः (भरननजजयाः) प्राकृतपैङ्गलम्- २/२०२
रामचन्द्रविबुधस्य— मत्तविलासिनी [वृत्तरत्नाकरटीका— ३/९९/३]
चन्द्रशेखरभट्टस्य— ब्रह्मानन्दः (सप्त मगणाः) वृत्तमौक्तिकम्- २/५२०

## दुःखभञ्जनस्य वाग्वल्लभे २१/१-१४ मध्ये ११ छन्दांसि

अशोकलोकालोकः, मन्दाक्षमन्दरः, तल्पकतल्लजः, विद्युदाली, दूरावलोकः, शरकाण्डप्रकाण्डम्, कलमतल्लिका, प्रतिमा, कमलशिखा, ललितललामम्, तडिदम्बरम् ।

## २२-आकृतिवृत्तौ द्वाविंशत्यक्षरपादे ३१ छन्दांसि

भरतस्य— मद्रकम्, अश्वललितम्, क्रोञ्चा [नाट्य १६/९७,१००,३२/३००]
स्वयम्भुवः — मदिरा (सप्त भगणा गुरुः) स्वयम्भूच्छन्दः — १/५८
जयकीर्तेः — महास्रग्धरा (सततनसररगाः), मदनसायकः [२/२४५, २४७]
रत्नमञ्जूषाकारस्य— दीपार्चिः [रत्नमञ्जूषा—७/१६]
केदारभट्टस्य— लालित्यम् (मसजयभभनगा), वृत्तरत्नाकरपाण्डुलिपिः (दा)—
३/१००/३

सुल्हणस्य— लालित्यम् (मसरसतजनगाः,) महास्रग्धरा (सजतनसररगाः)
वृत्तरत्नाकर-सुकविहृदयानन्दिनीप्रतिरन्या–३/१००/२, ४
प्राकृतपैङ्गलकारस्य— हंसी (मौ तनौ नौ सगौ) प्राकृत पैङ्गलम्–२/२०४
चन्द्रशेखरभट्टस्य— विद्यानन्दः, अच्युतः, मदालसः, तरुवरः (वृत्तमौक्तिकम्-२/५३९, ५५०, ५५२, ५५६]

## दुःखभञ्जनस्य वाग्वल्लभे २२/१-१९ मध्ये १६ छन्दांसि

वासकलीला, द्रुतमुखम्, भीमाभोगः, वीरनीराजना, कङ्कणकाणवाणी, कङ्कणकाणः, अर्भकमाला, भस्त्रानिस्तरणम्, अयमानम्, भोगावली, स्वर्णाभरणम्, निष्कलकण्ठी, भुजङ्गोद्धतम्, भद्रकम्, अचलविरतिः, वनवासिनी।

## २३-विकृतिवृत्तौ त्रयोविंशत्यक्षरपादे २९ छन्दांसि

भरतस्य— पुष्पसमृद्धा, मत्ताक्रीडा [नाट्य० ३२/२९०, ३०२]
पिङ्गलस्य— अश्वललितम् (नजभजभजभलगाः) छन्दः सूत्रम्–७/२८
जयकीर्तेः — हंसगतिः, चित्रकम्, शङ्खः [छन्दोऽनु० २/४९, २५१, २५२]
विरहाङ्कस्य – हयलीलगतिः [वृत्तजातिसमुच्चः – ५/४७]
रत्नमञ्जूषाकारस्य— वृन्दारकः [रत्नमञ्जूषा–७/१८]
हेमचन्द्रस्य— चपलगतिः [छन्दोऽनुशासनम्– २/३६३]
कविदर्पणकारस्य— चित्रकम् [कविदर्पणः – ४/९५]
प्राकृतपैङ्गलकारस्य— सुन्दरी (सौ भसौ तजौ जलगाः) पैङ्गलम्–२/२०६।
अत्र सप्तमे दशमे च वर्णे यतिं मत्वा वृत्तमौक्तिके— २/५६२
भागे पद्मावतिकानामन्तरं स्वीक्रियते।
रामचन्द्रविबुधस्य- मयूरगतिः (सप्तभगणा गुरू) वृत्तरत्नाकरटीका-३/१०२/१
चन्द्रशेखरभट्टस्य— दिव्यानन्दः, मल्लिका, कनकवलयः [वृत्तमौक्तिकम्-२/५५८, ५७०, ५७४]

### दुःखभञ्जनस्य वाग्वल्लभे २३/१-१८ मध्ये १३ छन्दांसि

परिधानीयम्, विलासवासः, मन्थरायतम् पुलकाञ्चितम्, इन्द्रविमानम्, विपुलायितम्, पारावारान्तस्थम्, रामाबद्धम्, विलम्बललितम्, गोत्रगरीयम्, अमरचमरी, चकोरः, संसृतशरधिः ।

### २४-संकृतिवृत्तौ चतुर्विंशत्यक्षरपादे २८ छन्दांसि

भरतस्य– मेघमाला, स्खलितम्, सम्भ्रान्ता [१६/१०३, ३२/२७१, २६४]
पिङ्गलस्य — तन्वी [भतनसभभनयाः] छन्दःसूत्रम् — ७/३०
जयकीर्तेः — ललितलता, हंसपदम्, महामदनसायकः [२/२५४–२५६]
रत्नमञ्जूषाकारस्य — विभ्रमगतिः [मसजसततभराः] मञ्जूषा–७/२४
हेमचन्द्रस्य — सुभद्रम् (अष्ट भगणाः) छन्दोनुशासनम् — २/३६८
प्राकृतपैङ्गलकारस्य — दुर्मिला (अष्ट सगणाः) प्राकृत पैङ्गलम्–२/२०८
चन्द्रशेखरभट्टस्य– रामानन्दः, माधवी, तरलनयनम् [२/५७६, ५८६, ५८८]

### दुःखभञ्जनस्य वाग्वल्लभे २४/१-१८ मध्ये १५ छन्दांसि

वंशलोन्नता, धौरेयम्, भुजङ्गः, भासमानविभ्रमम्, समाहितम्, विगाहितगेहः, अधीरकरीरः, अर्दितम्, पार्षतसरणम्, गङ्गोदकम्, उत्कटपट्टिका, शम्बरः, वेल्लितवेलः, अतुलपुलकम्, अनामयम् ।

### २५-अभिकृतिवृत्तौ पञ्चविंशत्यक्षरपादे २४ छन्दांसि

भरतस्य— क्रौञ्चपदा (भमसभना नौ नगौ) नाट्य शास्त्रम्-१६/१०६
जयकीर्तेः — हंसलयः, मत्तेभः [छन्दोऽनुशासनम्–२/२५७, २५६]
रत्नमञ्जूषाकारस्य— हंसपदा (तयभा भनौ नौ नगौ) मञ्जूषा-७/२७
हेमचन्द्रस्य— चपलम् (नजजयना नौ नगौ) छन्दोऽनु० २/३७५
चन्द्रशेखरभट्टस्य — कामानन्दः, मल्ली, मणिगणः [वृत्तौक्तिकम्– २/५६०, ५६५, ५६७]

### दुःखभञ्जनस्य वाग्वल्लभे २५/१-१८ मध्ये १६ छन्दांसि

शरभूरिणी, ह्रीणहैयङ्गवीनम्, नीपवनीयकम्, कुमुदमाला, रसिकरसाला,

विरहविरहस्यम्, भास्करः, चित्तचिन्तामणिः, व्याकोशकोशलः, शिविका, भाविनीविलसितम्, विशेषकवलितम्, अभ्रभ्रमणम्, अलका, मल्लपल्लीप्रकाशः, सौदामनदाम ।

## २६-उत्कृतिवृत्तौ षड्विंशत्यक्षरपादे ३४ छन्दांसि

भरतस्य— भुजङ्गविजृम्भितम्, वेगवती [नाट्य–१६/१०६, ३२/२६६]
पिङ्गलस्य— अपवाहः (मो नषट्कं सो गुरू) छन्दःसूत्रम्– ७/३३
जयकीर्तेः — वनलतिका, मकरन्दः, सुधाकलशः [छन्दोऽनु० २/२६२-२६४]
केदारभट्टस्य— भुजङ्गेरितम् (मयनतननरयलगाः) वृत्तरत्नाकरपाण्डुलिपिः (सा) – ३/१०६/२
रत्नमञ्जूषाकारस्य— आपीडः [रत्नमञ्जूषा–७/३०]
चन्द्रशेखरभट्टस्य— गोविन्दानन्दः, माधवी, कमलदलम् [वृत्तमौक्तिकम्– २/५९९, ६०७, ६०६]
समयसुन्दरस्य- भुजङ्गेरितम् [मयनतननरसलगाः) वृत्तरत्नाकर–सुगमावृत्तिः —३/१०६/१
श्रीकृष्णभट्टस्य— चण्डकीलः [वृत्तमुक्तावलिः — ३/२८६]

## दुःखभञ्जनस्य वाग्वल्लभे २६/२-२५ मध्ये २१ छन्दांसि

तनुकिलकिञ्चित्, विनयविलासः, विश्वविश्वासः, अशोकानोकहः, आभासमानम्, वीरविक्रान्तम्, विकुण्ठकण्ठः, चारुगतिः, भसलशलाका, उज्झितकदनम्, कुहककुहरः, सूरसूचकः, विषाणाश्रितः, विनिद्रासिन्धुरः, शकुन्तकुन्तलः, काकलीकलकोकिलः, शृंखलवलयितम्, विरामवाटिका, कर्णाटकः, कुम्भकः, वशंवदः ।

## २७-सप्तविंशत्यक्षरपादे १२ दण्डकवृत्तानि

माण्डव्यस्य— चण्डवृष्टिप्रपातः (द्वौ नगणौ सप्तरगणाः) छन्दःसूत्रम्–७/३६
जयदेवस्य— प्रचितः (द्वौ नगणौ केऽपि सप्त गणाः) जयदेवच्छन्दः– ७/३४

जयकीर्तेः — विकसितकुसुमम्, (मभौ नषट्कं सः), मालावृत्तम्, (मौ तनभा मौ भमौ), त्रिपदललितम् (नौ नौ भनौ भनौ सः), त्रिभङ्गी (नसभनतजतसयाः), [छन्दोनुशासनम्–२/२६५-२६८]

हेमचन्द्रस्य— मालाचित्रम् (मततततननययया:) छन्दोऽनुशासनम्- २/३६१

गङ्गादासस्य — कुसुमस्तवकः (नव सगणाः), मत्तमातङ्गलीलाकरः (नव रगणाः) छन्दोमञ्जरी —२/६/४,५

रामचन्द्रविबुधस्य — दण्डकम् (ननताऽनन्तरं केऽपि षड्गणाः) वृत्तरत्नाकर-टीका— ३/१०६/१

दुःखभञ्जनस्य — अशोकपुष्पमञ्जरी (रजरजरजरजराः) अनङ्गशेखरः (२७ वर्णपर्यन्तं यथेच्छ लघुगुरुवर्णाः) वाग्वल्लभे दण्डके—३,६

अतः परं (२८) अष्टविंशतिवर्णतो (९९९) नवनवत्यधिकनवशतवर्णपर्यन्तं ९२ दण्डकानि प्राप्यन्ते। १७३ अर्धसमवृत्तेषु ९७ विषमवृत्तेषु, १२० मात्रावृत्तेषु च कस्य कियद् योगदानमित्यनुसन्धेयं बुधैः। यत्र भरतस्याऽपरवक्त्रपुष्पिताग्राऽऽर्यावृत्तानि, पिङ्गलस्योपजाति–गीत्यार्याखञ्जावृत्तानि च प्रसिद्धानि सन्ति।

**कलावतीतनूजेन होतीलालकृतात्मना।**
**रामकिशोरमिश्रेण शूकरक्षेत्रवासिना॥**

**भरतपिङ्गलादीनां छन्दोयोगैः सह कृता।**
**तृतीयभागसंयुक्ता पूर्णा छन्दस्कलावती॥**

—:०:—

सोरोंपुरी लसति भारत उत्तरस्याम्,
छन्दस्कलारचयितुर्भुवि जन्मभूमिः ।
श्रीविश्वनाथ इह यत्प्रपितामहोऽभूत्,
ओङ्कारमिश्र इह यस्य पितामहश्च ॥ १ ॥

बाणग्रहग्रहकलानिधि (१९९५) वैक्रमाब्दे,
श्रीहोतिलालगृहिणीह कलावती यम् ।
षष्ठ्यां शनौ धवलफाल्गुनिके ह्यसूत,
कीर्ति तनोति स तु रामकिशोरमिश्रः ॥ २ ॥

विद्यालये मदनमोहनमालवीये,
लब्ध्वा प्रवक्तृपदमत्र स खेखड़ायाम् ।
पी-एच. डी. लसितसंस्कृतसंविभागे,
अध्यक्षपुण्यपदवीं समलङ्करोति ॥ ३ ॥




सोरोपुरे प्रथमशिक्षणमत्र यस्य,
शास्त्रीतिशिक्षणमभूदिह कासगञ्जे ।
आचार्यशिक्षणमभूदथ कर्णपुर्याम्,
काव्यं वसन्ततिलक रचितं हि तेन ॥ ४ ॥

विद्योत्तमामिह महाकविकालिदासम्,
सगृह्य येन रचितं हि महत्सुकाव्यम् ।
प्रश्नोत्तराणि बहुचारुतराणि सन्ति,
हृद्यानि तत्र खलु षोडशसर्गमध्ये ॥ ५ ॥

अङ्गुष्ठदानमपि सा किरणावलिश्च,
गीतावलिश्च हि किशोरकथावलिश्च ।
एकाङ्कनाटकचमत्कृतिरस्ति यस्य,
कीर्ति तनोति स तु रामकिशोरमिश्रः ॥ ६ ॥

—:•:—

—वसन्ततिलकात् ।

## कवेः प्रकाशिताः संस्कृतग्रन्थाः

१- काव्यकिरणावलिः (उ० प्र० संस्कृताकादेमीतः पुरस्कृता)।

२- विद्योत्तमाकालिदासीयम् (महाकाव्यम् ,, ,, पुरस्कृतम्)।

३- श्रीगरुडध्वजसपादशतकम् (उ० प्र० संस्कृताकादेमीतः पुरस्कृतम्)।

४- किशोरकथावलिः (कथासंग्रहो) ,, ,, पुरस्कृता।

५- अङ्गुष्ठदानम् (नाटकम्)। ६- बालचरितम् (गीतिकाव्यम्)।

७- वसन्ततिलकम् (देवस्तुतिकाव्यम्)।

८- एकाङ्कावलिः, ९- एकाङ्कमाला (एकाङ्कनाटकसंग्रहौ)।

१०- अन्तर्दाहः (पुरस्कृत उपन्यासः)।

११- छन्दस्कलावती (छन्दःशास्त्रीयरचना)।

१२- पतिपत्नीविवादशतकम्।

## कवेरन्याः संस्कृतरचनाः प्रकाशनद्वारे

१३- एकाङ्कनाटकावलिः। १४- निबन्धबन्धः।

१५- छान्दसग्रन्थपरम्परा। १६- वैदिकच्छन्दोनिरूपणम्।

१७- लौकिकच्छन्दोनिरूपणम्। १८- शैवभक्तितरङ्गिणी।

१९- देवभक्तितरङ्गिणी। २०- वैष्णवभक्तितरङ्गिणी।

२१- अवतारभक्तितरङ्गिणी। २२- देवीस्तवतरङ्गिणी।

२३- त्यागपत्रनिरासम् (पुरस्कृतनाटकम्)

२४- पत्नीत्यागम् (पुरस्कृतमेकाङ्कनाटकम्)

२५- संस्कृत छन्दों का उद्भव तथा विकास (शोधप्रबन्ध)।

२६- किशोरकविताकर (हिन्दी रचना)।

२७- यक्षसन्देश (मेघदूत का हिन्दी में भावानुवाद)।

## कवेः प्रकाशिताः संस्कृतग्रन्थाः

लिः (उ० प्र० संस्कृताकादेमीतः पुरस्कृता)।
दासीयम् (महाकाव्यम् ,, ,, पुरस्कृतम्)।
ादशतकम् (उ० प्र० संस्कृताकादेमीतः पुरस्कृतम्)।
ाः (कथासंग्रहो) ,, ,, पुरस्कृता।
नाटकम्)। ६- बालचरितम् (गीतिकाव्यम्)।
देवस्तुतिकाव्यम्)।
- एकाङ्कमाला (एकाङ्कनाटकसंग्रहो)।
स्कृत उपन्यासः)।
(छन्दःशास्त्रीयरचना)।
शतकम्।

## ्याः संस्कृतरचनाः प्रकाशनद्वारे

लिः। १४- निबन्धबन्धः।
पगा। १६- वैदिकच्छन्दोनिरूपणम्।
निरूपणम्। १८- शैवभक्तितरङ्गिणी।
णी। २०- वैष्णवभक्तितरङ्गिणी।
रङ्गिणी। २२- देवीस्तवतरङ्गिणी।
म् (पुरस्कृतनाटकम्)
रस्कृतमेकाङ्कनाटकम्)
उद्भव तथा विकास (शोधप्रबन्ध)।
र (हिन्दी रचना)।
त का हिन्दी में भावानुवाद)।

## कवेः प्रकाशिताः संस्कृतग्रन्थाः

१- काव्यकिरणावलिः (उ० प्र० संस्कृताकादेमीतः पुरस्कृता)।
२- विद्योत्तमाकालिदासीयम् (महाकाव्यम् ,, ,, पुरस्कृतम्)।
३- श्रीगरुडध्वजसपादशतकम् (उ० प्र० संस्कृताकादेमीतः पुरस्कृतम्)।
४- किशोरकथावलिः (कथासंग्रहो) ,, ,, पुरस्कृता।
५- अङ्गुष्ठदानम् (नाटकम्)। ६- बालचरितम् (गीतिकाव्यम्)।
७- वसन्ततिलकम् (देवस्तुतिकाव्यम्)।
८- एकाङ्कावलिः, ९- एकाङ्कमाला (एकाङ्कनाटकसंग्रहो)।
१०- अन्तर्दाहः (पुरस्कृत उपन्यासः)।
११- छन्दस्कलावती (छन्दःशास्त्रीयरचना)।
१२- पतिपत्नीविवादशतकम्।

## कवेरन्याः संस्कृतरचनाः प्रकाशनद्वारे

१३- एकाङ्कनाटकावलिः। १४- निबन्धबन्धः।
१५- छान्दसग्रन्थपरम्परा। १६- वैदिकच्छन्दोनिरूपणम्।
१७- लौकिकच्छन्दोनिरूपणम्। १८- शैवभक्तितरङ्गिणी।
१९- देवभक्तितरङ्गिणी। २०- वैष्णवभक्तितरङ्गिणी।
२१- अवतारभक्तितरङ्गिणी। २२- देवीस्तवतरङ्गिणी।
२३- त्यागपत्रनिरासम् (पुरस्कृतनाटकम्)
२४- पत्नीत्यागम् (पुरस्कृतमेकाङ्कनाटकम्)
२५- संस्कृत छन्दों का उद्भव तथा विकास (शोधप्रबन्ध)।
२६- किशोरकविताकर (हिन्दी रचना)।
२७- यक्षसन्देश (मेघदूत का हिन्दी में भावानुवाद)।